





ISSN : 0975-1769

# संस्कृतविमर्शः

( यू.जी.सी. केयर-मानिता विद्वत्परिशीलिता अन्ताराष्ट्रीया शोधपत्रिका )

(An UGC-CARE Listed Peer-Reviewed International Research Journal)

## नवोत्कर्षः

अङ्कः 22 ( जनवरी 2022 - जून 2022 ) वर्षः 2023

प्रधानसम्पादकः

प्रो. श्रीनिवास वरखेड़ी

कुलपतिः

कार्यकारी सम्पादकः

डॉ. मधुकेश्वरभट्टः

कार्यकारि-सम्पादकौ

डॉ. गणेश ति. पण्डितः

डॉ. बिपिन कुमार झाः



केन्द्रीयसंस्कृतविश्वविद्यालयः

संसदः अधिनियमेन स्थापितः

देहली




# संस्कृतविमर्शः

(An International Refereed & Peer-Reviewed
Research Journal, UGC-CARE Listed)

## नवोत्कर्षः

अङ्कः 22 (जनवरी 2022 - जून 2022) वर्षम् 2023





**केन्द्रीयसंस्कृतविश्वविद्यालयः**
**संसदः अधिनियमेन स्थापितः**
**देहली - 110 058**

# परामर्शदातृ-समितिः

1. **प्रो. बनमाली बिश्वालः**
   अधिष्ठाता (शैक्षणिकः)
   केन्द्रीयसंस्कृतविश्वविद्यालयः,
   नवदेहली-110058

2. **प्रो. ललित कुमार त्रिपाठी**
   अधिष्ठाता (शोधप्रभागः)
   गङ्गानाथझापरिसरः
   केन्द्रीयसंस्कृतविश्वविद्यालयः
   प्रयागराजः, उत्तरप्रदेशः

3. **प्रो. गोदावरीमिश्रः**
   सङ्कायाध्यक्षः - SBSPCR
   नालन्दाविश्वविद्यालयः, राजगृहम्,
   बिहारः, पिन-803116

4. **प्रो. शशिप्रभाकुमारः**
   सङ्कायाध्यक्षा,
   श्रीशङ्कराचार्यसंस्कृतमहाविद्यालयः,
   नवदेहली, पिन-110001

5. **प्रो. रमेशकुमारपाण्डेयः**
   शोधविभागः,
   श्रीला.ब.शा.रा.सं.वि.वि., नवदेहली,
   पिन-110016

6. **प्रो. राधाकृष्ण सि.एस्.**
   संस्कृतविभागः,
   पाण्डेचेरिविश्वविद्यालयः, पाण्डेचेरी
   पिन- 605014

# सम्पादकीयम्

अथ विश्वस्य कर्ता भुवनस्य गोप्ता चापि सद्विद्यायाः प्रसाराय समुत्सक एव आसीत् इति उपनिषद्वाणी। तदनु सद्विद्यायाः प्रसारायैव विद्यालयाः विश्वविद्यालयाश्च प्रतिष्ठाप्यन्ते। अध्यात्मविद्या विद्यानाम् इत्यतः सर्वविद्यामूलायाः अध्यात्मविद्यायाः प्रसाराय पूर्वसूरिणः प्रायतन्त। आधुनिके काले अध्यात्मविद्यया सह आधुनिक विद्यायाश्चापि प्रसारः सरलसंस्कृतेन संस्कृतविश्वविद्यालयेन च विधीयते। अस्माकं केन्द्रीयसंस्कृतविश्वविद्यालयस्तु उभयविधविद्याप्रसारेण सह प्रसार्यमाणासु विद्यासु तदङ्गभूतेषु साधनेषु च गुणवत्तायाः संरक्षणं प्रतिपदं प्रकुरुते। एतत्कर्मण्यपि साफल्यं सम्पादितमस्ति अनेन विश्वविद्यालयेन। अतः एव राष्ट्रियमूल्याङ्कनप्रत्यायनपरिषदा अस्य गुणवत्तां परीक्ष्य **A++** इत्येषा सर्वोत्कृष्टा श्रेणी प्रदत्ता वर्तते। विश्वविद्यालयस्यास्य माननीयकुलपतीनाम् **आचार्य श्रीनिवासः वरखेडीवर्याणां** मार्गदर्शनेनैव अयं नवोत्कर्षः सम्प्राप्तः इति स्पष्टम्। तेषां सन्ततमार्गदर्शने विद्यायाः पठनपाठनप्रकाशन-संशोधनादिषु सर्वेषु शैक्षिककार्येषु गुणवत्तां परिरक्षितुम् असौ विश्वविद्यालयः अनुक्षणं प्रयतते। विशिष्य अस्मिन् वर्षे शैक्षिकगुणवत्तायाः परिरक्षणाय परिवर्धनाय च **शैक्षिकगुणोत्कर्षवर्षः** (2023-24) सार्थकोपक्रमैः समाचरणीयः इति कुलपतीनां सत्सङ्कल्पः। शैक्षिकगुणोत्कर्षवर्षाचरणावसरे पठनपाठनप्रकाशनसंशोधनादिषु कार्येषु विशिष्टं ध्यानं केन्द्रीकरोति सपरिसरः केन्द्रीयसंस्कृतविश्वविद्यालयः।

अस्मिन् कर्मणि आबहोः कालात् प्रकाश्यमाना **संस्कृतविमर्शः** इत्येषा शोधपत्रिका भृशमुपकरोति। लक्ष्यकेन्द्रिता विविधविद्याधारितशोधलेखैः शोभमाना च एषा शोधपत्रिका नैरन्तर्येण सारस्वतलोकं प्रकाशयन्ती वर्तते। विश्वविद्यालयानुदानायोगस्य रक्षितसूच्याम् उल्लिखितायाम् अस्यां पत्रिकायां संस्कृतेन सह आङ्ग्लभाषायां हिन्दीभाषायां च उपनिबद्धाः लेखाः लसन्ति। शोधपत्रिकायाः द्वाविंशे अङ्के त्रयोदश लेखाः संस्कृतेन दश लेखाः हिन्द्यां नव लेखाश्च आङ्ग्लभाषायाम् उपनिबद्धाः सन्ति। दर्शनसाहित्यव्याकरणादिभिः शास्त्रविशेषैः चितलेखैः सह हिन्दीसाहित्यस्य काश्मीरशैवदर्शनादिभिरपि चिताः शोधलेखाः अस्मिन् अङ्के सन्ति। आयुर्वेदविज्ञानेन तीर्थव्रतविशेषेण सामाजिकाध्ययनेन च सम्बद्धाः शोधलेखाः आङ्ग्लभाषाविभागे सन्ति। एवं संस्कृत- हिन्दी - आङ्ग्लभाषासु उपनिबद्धस्य अस्य नवोत्कर्षद्योतकस्य

अङ्कस्य सम्पादनकर्मणि प्रतिपदं मार्गदर्शनं कृतवद्भ्यः कुलपतिभ्यः सम्पादकगणः सनमोवाकं धन्यवादान् व्याहरति। प्रकाशनकार्येषु विश्वविद्यालयस्य कुलसचिवाः आचार्य रणजित कुमार बर्मनवर्याः अपि काले काले अभिप्रेरयन्ति इत्यतः तान् अपि सश्रद्धं नुमः। एवमेव नवघटितपरामर्शदातृसमितेः सर्वेभ्यः आचार्येभ्यः आचार्याभ्यश्च आधमर्ण्यं प्रकटयामः। शोधप्रकाशनानुभागस्य सहायकनिदेशकः जितेन्द्रकुमारवर्यः मुद्रकः अन्ये सहयोगिनश्च प्रकाशने सदैव साहाय्यमाचरन्तीत्यतः तेभ्यः सर्वेभ्यः साधुवादान् समर्पयामः।

**सम्पादकगणः**

# विषयानुक्रमणिका



## संस्कृत-संभागः

## हिन्दी संभाग

## English Section





# समासे उद्देश्यविधेयभावः

डॉ. वि. श्रीनिवासनारायणः

**उपोद्घातः**

पराार्थाभिधायकेषु शब्देषु वृत्तिरित्याख्यया संस्कृतप्रपञ्चे प्रसिद्धेषु समासोऽन्यतमः। समासादिवृत्तौ एकार्थीभाव एव सामर्थ्यम् इत्यातिष्ठन्ते वैयाकरणाः। एकार्थीभावाश्रयणे ऐकपद्य-ऐकस्वर्यादिप्रयोजनानि समर्थसूत्रे भाष्यकारैरभिहितानि। तान्यतिरिच्य, समास-शक्तिप्रकरणे **चकारादिनिषेधोऽथ**[1] इति कारिकाव्याख्यायां कौण्डभट्टेन एकार्थीभावसामर्थ्याश्रयणात् समासादिषु विशिष्टशक्त्यैव न्यायतः इतरेतरयोगाद्यर्थः बुध्यत इति, व्यपेक्षासामर्थ्यमिति वदतां तु तदर्थबोधनार्थानां चकारादीनां समासादिषु प्रयोगः प्राप्नोति, तन्निषेधः कर्तव्यः इति महद्गौरवम् इति स्थितिः उपपादिता। तदुत्तरं विशिष्टशक्तिसाधकम् उपायान्तरं तत्रैवाग्रिमकारिकाव्याख्यामुखेन उपादिक्षत् कौण्डभट्टः। तदुपसंहारे-समासे विशिष्टशक्तिस्वीकारोऽवश्यं कर्तव्यः जैमिनीयैः। अन्यथा तेषां स्वसिद्धान्तभङ्गः प्राप्नोतीत्युक्तम्। तथाहि-वषट्कर्तुः प्रथमभक्षः इति वाक्ये भक्षमुद्दिश्य प्राथम्यविधानम् इत्युद्देश्यविधेयभावेन अन्वयो न युज्यते, एकप्रसरताभङ्गापत्तेरिति, त्र्यङ्गैः स्विष्टकृतं यजति इति वाक्ये अङ्गानुवादेन त्रित्वविधानं न युज्यते, एकप्रसरताभङ्गापत्तेरिति च तत्सिद्धान्तः। अयञ्च सिद्धान्तः समासे विशिष्टशक्तिस्वीकार एव सङ्गच्छते। एतत्प्रसङ्गात् समासे उद्देश्यविधेयभावेन अन्वयो न भवतीत्ययं विषयः समासशक्तिकृतः विशेष उत नेति महता ग्रन्थेन विमृष्टं वैयाकरणसिद्धान्तभूषणे, वैयाकरणसिद्धान्तलघुमञ्जूषायाञ्च। सोऽत्र लेखे सङ्ग्रहेण उपस्थाप्यते।

**उपक्रमः**

उद्देश्यविधेयभावेन अन्वये पदार्थयोः पृथगुपस्थितिः तन्त्रमिति व्युत्पत्तेः सत्त्वेन नीलोत्पलमित्यादिसमासे नीलोत्पलपदार्थयोः पृथगुपस्थित्यभावादेव तयोः उद्देश्यविधेय-भावेन अन्वयो न भवति। अन्यथा नीलमुत्पलमित्यत्रेव उद्देश्यविधेयभावेन अन्वयः

---

* सहायकाचार्यः, कालिकट् आदर्शसंस्कृतविद्यापीठम्, बालुश्शेरी।

1. वै.सि.भू. समासशक्तिः कारिकासंख्या-5

स्यात् इत्यभिप्रैति कौण्डभट्टः। अतः विशिष्टशक्त्यस्वीकारे पूर्वोक्तव्युत्पत्ति- भञ्जनन्ते स्यादिति दूषणमभिहितन्तेन **अषष्ठ्यर्थबहुव्रीहौ** इत्यादिकारिकाव्याख्यायाम्। नागेशभट्टस्तु समासे उद्देश्यविधेयभावस्वीकारेऽपि न कश्चिद्दोषः न वा असामर्थ्यम् इति तस्याः व्युत्पत्तेः उत्सर्गत्वमिति च मन्यते।

अयमत्र प्रसङ्गः-श्रीमद्भट्टोजिदीक्षितविरचित-वैयाकरणसिद्धान्तकारिका-व्याख्याने समासशक्तिप्रकरणे समासे विशिष्टशक्तिः स्वीकर्तव्या इति कौण्डभट्टः भूषणसारे भूषणे च महता प्रबन्धेन निरूपयाम्बभूव। लक्षणाश्रयणेन अवयवपदशक्त्यैव समासतो बोधः सम्भवति। अतः विशिष्टे शक्तिः न स्वीकर्तव्या इति नैयायिकाः मीमांसकाश्च आशेरते। तत्र विशिष्टशक्तिः उपेयैवेत्येवं महता प्रबन्धेन पूर्वपक्षिणः खण्डयित्वा, कौण्डभट्टः मीमांसकैः स्वसिद्धान्तरक्षणार्थं विशिष्टशक्तिः अभ्युपगन्तव्यैव, अन्यथा तत्तदधिकरणविरोधः प्राप्नोति इत्येवम् उपपादयामास। यद्यपि वैयाकरणसिद्धान्त-भूषणे उपदशम् अधिकरणानि महता प्रबन्धेन प्रदर्शितानि, तथापि भूषणसारे त्रीण्यधिकरणानि विशिष्टशक्तिस्वीकार एव सङ्गच्छन्त इति सङ्क्षेपेण प्रदर्शितम्। तद्यथा-वषट्कारस्य भक्षनिमित्तताधिकरणम्। द्वितीयं स्विष्टकृद्धोमाधिकरणम्। तृतीयम् अरुणाधिकरणम् इति। तत्र आद्ये अधिकरणद्वये समासे उद्देश्यविधेयभावेनान्वयो न, एकप्रसरताभङ्गापत्तेरिति दोषः प्रदर्शितः। सोऽत्र समालोच्यते।

तद्यथा-"वषट्काराच्च भक्षयेत्" (मी. 3.5.10.31) इति सूत्रम्। अनेन विधिवाक्येन वषट्करणं निमित्तीकृत्य होतारमुद्दिश्य प्रथमभक्षणं विधीयते उत "यथा चमसम् अन्यांश्चमसान् चमसिनो भक्षयन्ति" इत्यादिसमाख्यारूपेण मानान्तरेण प्राप्तं भक्षणमुद्दिश्य प्राथम्यमात्रं विधीयते, उत भक्षणमुद्दिश्य वषट्कारनिमित्तकं प्राथम्यमात्रं विधीयते, उत वषट्कर्तुः भक्षणम् उद्दिश्य प्राथम्यं विधीयते इति सन्देहः। वषट्कर्तारमुद्दिश्य प्राथम्यविशिष्टं भक्षणं विधीयते, तत्र वषट्कारोऽपि निमित्तम् इति सिद्धान्तः। यद्यपि भक्षणं प्रमाणान्तरप्राप्तं, तथापि प्राथम्यविशिष्टं भक्षणं तु न प्राप्तम्। अतः विशिष्ट-भक्षणमेव विधीयते इति।

प्रथमभक्ष इति समस्तं पदम्। सामर्थ्ये सत्येव समासः। तच्च सामर्थ्यम् अन्वितपदार्थयोः परस्परान्वयरूपम्, तदितरनैरपेक्ष्येणार्थबोधकत्वरूपं च। तदेवोच्यते "सविशेषणानां वृत्तिर्न, वृत्तस्य वा विशेषणयोगो न" इति। अत्र भक्षपदस्य वषट्कर्तुरिति पदसापेक्षत्वे सापेक्षमसमर्थवदिति असामर्थ्यात् समासो न स्यात्। वषट्कर्तुः इत्यस्य समासबहिर्भूतत्वात्।

अत्र शङ्का-भक्षः विशेष्यम्। विशेष्यस्य सापेक्षत्वेऽपि नासामर्थ्यम् इति।

समाधानम्-भक्षस्य प्राथम्यविधाने वषट्कारस्यापि निमित्तत्वात्, वषट्कारनिमित्तकं प्राथम्यं भक्षे इति प्रथमभक्ष इति पदे विशेषणस्य प्राथम्यबोधकस्यापि सापेक्षत्वात्

असामर्थ्यात् समासो न स्यात्।

अथ भक्षणमुद्दिश्य वषट्कर्तृत्वविशिष्टं प्राथम्यं विधीयेत तथापि विशेषणस्य सापेक्षत्वं स्पष्टमेव। तथा चासामर्थ्यात् समासो न स्यात्।

एवं प्रथमभक्ष इति एकमिदं समस्तं पदम्। अतः तस्य एकप्रसरता युक्ता। समस्तम् उद्देश्यप्रतिपादकं वा विधेयप्रतिपादकं वा एकविधमेवेति युक्तम्। न तु तत्र कस्यचिद् अंशस्य उद्देश्यप्रतिपादकत्वम्, अन्यस्य कस्यचित् विधेयप्रतिपादकत्वमिति। समस्तपदार्थस्य च सर्वस्य विशिष्टस्य एकेनैव प्रकारेण वाक्यार्थान्वयः वक्तव्यः। स एव एकविधान्वयः एकप्रसरतेत्युच्यते। किञ्च समस्यमानपदद्वयस्य अवयवशः व्यापारद्वये सति पदद्वयस्य सम्भूय युगपदेकार्थप्रतिपादकत्वाभावेन एकार्थीभावलक्षण-सामर्थ्याभावात् समास एव न स्यात्।

यथा नीलम् उत्पलम् इति व्यस्तस्थले यदुत्पलमिति, तन्नीलमिति वाक्यद्वयं भवति, न तथा नीलोत्पलमिति समासे तत्तदंशं स्वीकृत्य वाक्यद्वयेन विवरणं युज्यते इति पूर्वोक्तग्रन्थस्य तात्पर्यम्। तथा च एकप्रसरताभङ्गः समासस्य सामर्थ्यविघातकः इत्यर्थः। अतः प्रथमभक्ष इति समस्तस्य उद्देश्यसमर्पकत्वं वा विधेयसमर्पकत्वं वा एकमेव विवक्षितुं शक्यमिति। तथाच "प्रथमभक्ष" इत्यस्य समस्तत्वात् व्यस्ते इव तत्र उद्देश्यविधेयभावस्य वक्तुमशक्यत्वात् वषट्कर्तुः इत्युद्देश्यं, प्रथमभक्ष इति विधेयमिति स्वीकृत्य वषट्कर्तारम् उद्दिश्य प्राथम्यविशिष्टं भक्षणं विधीयते इति मीमांसकराद्धान्तः। अयं समासे विशिष्टां शक्तिं गमयति। अन्यथा विशिष्टशक्त्यनभ्युपगमे प्रथमभक्ष इत्येवं पदार्थद्वयस्य पृथगुपस्थितस्य सत्त्वेन उद्देश्यविधेयभावेनान्वये बाधकाभावात् एकप्रसरत्वभङ्गापत्तेः नोद्देश्यविधेयभाव इति कथनमसङ्गतं स्यात्।

एवं दशमे अध्याये सप्तमे पादे द्वितीयाधिकरणम् स्विष्टकृद्धोमाधिकरणम् (मी. 10.7.3.11)। "त्र्यङ्गैः स्विष्टकृतं यजति" इति विधिवाक्येन स्विष्टकृद्यागः विहितः। तं च यागमुद्दिश्य त्र्यङ्गैः इति तृतीयया अङ्गत्रयं विधीयते। अयञ्च पशुयागः। अत्रायं सन्देहः। अत्र स्विष्टकृद्यागमुद्दिश्य अप्राप्तमङ्गत्रयं विधीयते वा, पशुयागे एकादशानामङ्गानां हृदयादीनां (हृदय-जिह्वा-वक्षः-यकृत्-वृक्यौ-सव्यं दोः-उभे पार्श्वे-दक्षिणा श्रोणिः-गुदतृतीयम्) पूर्वमेव विधानात्, तानि अनूद्य त्रित्वमात्रं विधीयते वा, अर्थात् प्राप्तेषु हृदयादिषु प्रधानहविःषु कैश्चित् त्रिभिः यागः विधीयते वा इति। तत्र अङ्गानां प्राप्तत्वात् केवलं तानि उद्दिश्य त्रित्वमेव विधीयत इति पूर्वपक्षः।

त्र्यङ्गैरित्यस्य समस्तत्वात् एकप्रसरत्वभङ्गापत्त्या अङ्गानुवादेन (अङ्गानि उद्दिश्य) त्रित्वं विधातुं न शक्यम्, अतः इदम् अङ्गान्तरविधानमेव इति सिद्धान्तः। तदुक्तं शास्त्रदीपिकायाम्[1]-

---

1. शास्त्रदीपिका-पृ.757

**त्रित्वं नाङ्गानुवादेन विधातुं शक्यते तथा।**
**तस्य प्रसरभेदेन सामर्थ्यं हि विहन्यते॥ इति।**

व्याख्यातं च–"एकं हीदं समासपदं त्र्यङ्गैरिति। तदेकप्रसरम् युक्तं सकलम् उद्देशकमुपादानकं वा, उत्तरार्धं तूद्दिश्य पूर्वार्धे विधीयमाने प्रसरभेदात् सामर्थ्यविघातात् समासो न स्यात्" इति।

व्याख्यातं चैतत् सोमनाथेन[1]– "प्रथमम् उद्देश्यप्रतीतौ हि पश्चात्तत्र विधेयान्वयः। एवं च अङ्गोद्देशेन त्रित्वविधौ समासे एकदेशस्य अङ्गशब्दस्य प्रथमं स्वार्थप्रत्यायकत्वं, पश्चाच्चैकदेशान्तरस्य त्रिशब्दस्येति अवयवशो व्यापारद्वयप्रसङ्गात् पदद्वयस्य संभूय एकव्यापारत्वाभावेन एकार्थीभावलक्षणसामर्थ्याभावात् समासो न स्यादित्यर्थः" इति।

एवम् अधिकरणद्वये एकप्रसरताभङ्गापत्तेः उद्देश्यविधेयभावेनान्वयः निराकृतः। इदं च विशिष्टशक्तिस्वीकारे एव सङ्गच्छते। अन्यथा प्रथमो भक्ष इति, त्रिभिः अङ्गैः इत्यादाविव समासेऽपि पदार्थद्वयस्य पृथगुपस्थितत्वेन उद्देश्यविधेयभावेनान्वये बाधकाभावात् एकप्रसरताभङ्ग इति हेतुत्वेन कथनमसङ्गतं स्यात्।

यद्यपि केवलं विशेषणस्य सापेक्षत्वे एव सामर्थ्यविघातात् प्रधानस्य सापेक्षत्वेऽपि सामर्थ्याविघातात् पूर्वोक्ते स्थलद्वयेऽपि समासः निर्बाध एव। तथाहि–अत्र हि प्रथमभक्षपदे प्रधानं भक्षपदम्। तथा त्र्यङ्गशब्दे अङ्गपदं प्रधानम् (विशेष्यम्)। यथा सुन्दरः राजपुरुष इति प्रधानस्य सापेक्षत्वेऽपि वृत्तिः, तथा अत्रापि भक्षस्य अङ्गस्य च वषट्कर्तृस्विष्टकृत्सापेक्षत्वेऽपि सामर्थ्यं भवत्येव इति तन्निराकृतवान् कौण्डभट्टः भूषणे, तथापि पूर्वोक्तस्थलद्वये समासे उद्देश्यविधेयभावेनान्वयसत्त्वे तेनैव दोषवारणसम्भवे, प्रकारान्तरेण दोषवारणकथनस्य अनपेक्षितत्वेन, प्रकारान्तरेण दोषवारणं कुर्वतः कौण्डभट्टस्य समासे उद्देश्यविधेयभावेनान्वयो नेति, इदम् एकार्थीभावकृतं प्रयोजनम् इति च आशयः प्रतीयते। अत एव तेन उद्देश्यविधेयभावेनान्वये एकप्रसरताभङ्गः दोष उच्यते। (विशिष्टैकोपस्थितिजनकत्वरूपं सामर्थ्यम् एकप्रसरता) अयमेवाशयः हरदत्तमिश्रस्यापि। चतुर्थी चाशिष्यायुष्यमद्भद्रकुशलसुखार्थहितैः इति सूत्रेण विहितचतुर्थ्याः समासो नेति तदीयो ग्रन्थः। समासे कृते सति उद्देश्यविधेयभावेन बोधो न स्यादिति हेतुस्तत्र।

एवञ्चेत्थं पर्यवस्यत्यर्थः–यद्यपि वाक्यावस्थायां नीलम् उत्पलम्, कृष्णाय आयुष्यम् इत्यादिवाक्येभ्यः उद्देश्यविधेयभावेनान्वयः अभीष्टः, तथापि समासतः उद्देश्यविधेयभावेनान्वयः न शक्यते वक्तुम्। तथान्वये पदार्थयोः पृथगुपस्थितेः तन्त्रत्वात्। समासात् तु अपृथक्त्वेनोपस्थितिः पदार्थयोः इति विशिष्टशक्तिवादिनां प्राचीनानां तात्पर्यम् इति।

---

1. मयूखमालिका–शास्त्रदीपिका–पृ. 757

[1]नागेशभट्टस्त्विदं न सहते। वृत्तिविचारे मञ्जूषायाम् **अन्ये तु** इत्यादिना ग्रन्थेन एकार्थीभावे अपृथगुपस्थित्या उद्देश्यविधेयभावेनान्वयोऽयुक्त इति ग्रन्थमनूद्य, अत्रार्थे हरदत्तमिश्रादेः वृद्धस्यानुग्रहमुपदर्श्य, अलङ्कृत्य शिरश्छेद इति न्यायेन **तन्न** इत्यादिना महता प्रबन्धेन तत्खण्डितम्। एवं विशेषणसमासविषयके मञ्जूषाग्रन्थे **केचित्तु** इति ग्रन्थेन वषट्कर्तुः प्रथमभक्षः इत्यत्र भक्षान्तरविधिरेव, न तु होतृचमसः इति समाख्याबलात्प्राप्तवषट्कर्तृसम्बन्धिभक्षानुवादेन प्राथम्यविधिरिति मीमांसकानां मतमनूद्य खण्डितम्। तदत्रोपस्थाप्यते। तत्र युक्तयः प्रमाणानि च बहून्युदाहृतानि।

तत्र प्राचीनग्रन्थस्यायमनुवादः-वृत्तौ पदार्थयोरपृथगुपस्थितेः नोद्देश्यविधेय-भावेनान्वयः। पदार्थयोः पृथगुपस्थितावेव तथान्वयस्य तन्त्रत्वात्। आलङ्कारिकैरपि अविमृष्टविधेयांशदोषनिरूपणावसरे यत्रोद्देश्यविधेययोः पदाभ्यां पृथगुपस्थितिः, तत्रैव तथान्वय इति स्वीकृतम्। अत एव हरदत्तः चतुर्थी चाशिष्यायुष्य (पा. 2.3.73) इत्यादिसूत्रे प्रकटयामासेति। तमेवाशयम् **एतत्सूत्रविहितचतुर्थीविभक्त्यन्तस्य समासो न भवति। आशीर्विषये उद्देश्यविधेयभावो गम्यते, समासे तदवगमाभावाद्** इति नागेशभट्टः।

**सम्प्रति तत्खण्डनम्-**

भाष्यानुक्तत्वात् इति प्रथमो हेतुः-एकार्थीभावसामर्थ्यस्वीकारे बहूनि प्रयोजनानि भाष्ये प्रदर्शितानि। यदीदं प्रयोजनम् अभविष्यत्, तर्हि भाष्यकारोऽवश्यमेव प्रादर्शयिष्यत्। अन्यथा भाष्यग्रन्थस्य न्यूनता स्यादिति तदाशयः।

प्रमाणम्- **घ्वसोरेद्धावभ्यासलोपश्च** (पा. 6.4.119) इति सूत्रस्थ-अभ्यास-लोपश्चेति समस्तपदे तथान्वयस्य, अभ्यासमुद्दिश्य लोपः विधीयत इत्यर्थस्य च ऋषिसम्मतत्वेन, समासे उद्देश्यविधेयभावेनान्वयाभावः एकार्थीभावस्य प्रयोजनम् इति वक्तुमशक्यत्वादिति।

पुनः युक्तिरित्थम्-लोहितोष्णीषाः इत्यादौ उद्देश्यविधेयभावेनान्वयस्य मीमांसकैः कृतत्वाच्च समासे उद्देश्यविधेयभावेनान्वये नासाधुता इत्याशयेन भाष्ये एकार्थीभावस्य प्रयोजनेषु नैवं कथितम् इति। तद्यथा-लोहितोष्णीषाः ऋत्विजः प्रचरन्ति। श्येनयागे श्रूयते-"लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ती"ति। अनेन च ऋत्विज उद्दिश्य लोहितोष्णीषत्वं विधीयते चेदपि प्राप्ताप्राप्तविवेकन्यायेन उष्णीषादिलक्षणविशेषस्य अन्यतः प्राप्त्या विधेः लौहित्यादिलक्षणविशेषणमात्रे तात्पर्यगत्या पर्यवसानम्। तथाहि-श्येनयागः विकृतियागः। तस्य प्रकृतियागः ज्योतिष्टोमः। "प्रकृतिवद्विकृतिः कर्तव्या" इत्यतिदेशेन ज्योतिष्टोमविहितानि श्येनयागे अतिदिश्यन्ते। ज्योतिष्टोमे

---

1. वृत्तिविचारः पृ. 29-31

श्रूयते "सोष्णीषाः विनीतवसना ऋत्विजः प्रचरन्ति" इति। ततश्च श्येनयागे ऋत्विजाम् उष्णीषधारणं प्रकृतिवदतिदेशेनैव प्राप्तम्। तथा च अतिदेशप्राप्तम् उष्णीषम् उद्दिश्य लौहित्यं "लोहितोष्णीषाः ऋत्विजः प्रचरन्ति" इति वचनेन विधीयते। वस्तुतः अत्र शब्दमर्यादया ऋत्विज उद्दिश्य लोहितोष्णीषत्वमेव विधीयते। न तु उष्णीषमुद्दिश्य लोहितत्वम्। अत्र शब्देन विशिष्टवेषेणैव विध्यन्वयात् समासे एकेनांशेनोद्दिश्य अपरेणांशेन विधानानङ्गीकारात् न सामर्थ्यविघातनिबन्धनसमासानुपपत्तिरूपदोषप्रसङ्गः इति मीमांसकसमयः।

प्रमाणान्तरम्- विशेषणं विशेष्येण बहुलम् इति सूत्रस्थे **उभयविशेषणत्वाद् उभयविशेष्यत्वाद् उपसर्जनाप्रसिद्धिः** इति वार्तिके उभयमुद्दिश्य उभयं विशेषणं विधेयम्, उभयमुद्दिश्य उभयं विशेष्यं विधेयम् इत्यर्थस्य तद्व्याख्यानभाष्यात् प्रतीतेः समासे न तथान्वय इति वक्तुमशक्यत्वात्।

युक्त्यन्तरम्-समासे उद्देश्यविधेयभावेनान्वये असाधुत्वाभावादेव काव्यप्रकाशकृता, काव्यप्रदीपकृता वा अविमृष्टविधेयांशस्यैवोदाहरणत्वेन प्रदर्शितम्, न तु च्युतसंस्कृति-दोषस्य। यथा न्यक्कारो ह्ययमेव इत्यादौ उद्देश्य-विधेययोः आनन्तर्याभावेन, उद्देश्यवाचकविधेयवाचकयोः क्रमभङ्गेन च विलम्बेन उद्देश्यविधेयभावप्रतीतिः सहृदयहृदयस्य वैमुख्ये बीजम्, तथा पृथगुपस्थितयोरुद्देश्यविधेयभावेनान्वयस्योत्सर्गत्वेन तत्त्यक्त्वा, अपृथगुपस्थिते पदार्थद्वये उद्देश्यविधेयभावेन मिथ्यामहिम्नाम्, अलक्ष्य-जन्मतेत्यादौ सहृदयहृदयवैमुख्यम् अथवा पृथगुपस्थितयोरुद्देश्यविधेयभावेन अन्वय इति व्युत्पत्तेः परित्यागेन सहृदयस्य उद्वेगो वा अविमृष्टविधेयांशत्वकथने बीजम्। अतो तथान्वये नासाधुत्वम्। अत एवायं च्युतसंस्कृतिदोषोदाहरणत्वेन नोपात्त इति। अत एव काव्यप्रदीपकारोक्तः उद्देश्यविधेयभावेनान्वये पृथगुपस्थितिस्तन्त्रमिति नियमः उत्सर्गत इत्यभिप्रेति नागेशभट्टः।

हरदत्तमतखण्डनम्- आशीरर्थकचतुर्थीविभक्त्यन्तस्थले नित्यम् उद्देश्यविधेय-भावेनान्वयार्थं समासो न कर्तव्यः, समासे कृते तु उद्देश्यविधेयभावेनान्वयो न स्याद् इति हरदत्तमिश्रोक्तं तु न युज्यते। कृष्णाय आयुष्यं भूयाद् इत्यादौ तदुदाहरणे कृष्ण-आयुष्यपदार्थयोः क्रियायामेवान्वयात् परस्परम् अन्वयाभावात् सामर्थ्याभावात् समासो नेति वारणसम्भवात्। अत एव भद्र-आयुष्यादिकर्तृक-कृष्णसम्बन्ध्याशंसाविषयः भवनम् इति बोधः।

कर्मधारयसमासार्थविमर्शकग्रन्थे केचित्तु इति किञ्चिन्मतमनूदितं नागेशभट्टेन[1]। तथाहि-पण्डितो ब्राह्मणः, दधि रुचिकारि इत्यादि वाक्य इव, समासे पण्डितब्राह्मण इत्यादौ उद्देश्यविधेयभावेनान्वयवारणाय एकार्थीभाव आवश्यक इति केचन मन्यन्त

1. तत्रैव 88,89

इति। एवमभ्युपगम एव वषट्कर्तुः प्रथमभक्ष इत्यत्र भक्षान्तरविधिरेव, न तु होतृचमस इति समाख्याबलात् प्राप्तवषट्कर्तृसम्बन्धिभक्षानुवादेन प्राथम्यविधिरिति मीमांसकानां सिद्धान्तसङ्गतिरिति।

अत्रोच्यते-उद्देश्यत्वविधेयत्वे यच्छब्द-तच्छब्दोपबन्धव्यङ्ग्ये। वृत्तौ ऋद्धस्येत्यादिविशेषणवत् यत्तच्छब्दयोरप्यन्वयायोगात् न तथान्वय इति अर्थतः सिद्धम्। अतः नेदम् एकार्थीभावकृतं प्रयोजनम् इति। वस्तुतः यत्तच्छब्दयोरभावेऽपि उद्देश्यविधेयभावः प्रतीयत एव। अतः तेन हेतुना अत्र उद्देश्यविधेयभावो नेति वक्तुमशक्यम्। अत एव वृद्धैः **यद्वृत्तयोगः प्राथम्यम् इत्यादि उद्देश्यलक्षणम्** इति आदिपदम् उपात्तम्। प्रथमो भक्षः पण्डितो ब्राह्मणः, अपृक्त एकाल्प्रत्ययः इत्यादौ यत्तच्छब्दसहितयोः पदार्थयोः दर्शनाभावेऽपि उद्देश्यविधेयभावावगमात्, यत्तच्छब्दयोः नियमेनोपादानं कर्तव्यम् इति नेत्यवगन्तव्यम् इति तदाशयः। एवञ्च यथा विशिष्टोपस्थितावपि विशेषणादौ प्रकारतादिस्वीकारः, तथा उद्देश्यत्वादिस्वीकारे न कश्चिद् दोष इति। प्रथमभक्ष इत्यत्र तु समाख्यापेक्षया वाक्यश्रुत्योः बलवत्त्वेन प्रथमतोऽनेनैव भक्षान्तरविधिरिति नोद्देश्यविधेयभावेनान्वय इति न मीमांसासिद्धान्तविरोधः इति।

युक्त्यन्तरम्-एकार्थीभावाभावेऽपि घटम् इत्यादौ घटत्वविशिष्टघटरूपार्थबोधकं प्रकृतिम् उद्दिश्य, कर्मत्वाद्यर्थविशिष्टा द्वितीया विभक्तिः विधीयते इति सर्वसम्मतत्वेन एकस्मिन् पदेऽपि तथान्वयसत्त्वेन व्यतिरेकव्यभिचार इति।

**उपसंहारः**

वषट्कर्तुरित्यादिवाक्यस्थस्य प्रथमभक्ष इत्यादेः समासे उद्देश्यविधेयभावेनान्वयो न, एकप्रसरताभङ्गापत्तेः इति दोषो य उक्तः मीमांसकैः, सः विशिष्टशक्तिस्वीकार एव सङ्गच्छते इति प्रतिपादन एव कौण्डभट्टस्य तात्पर्यम्। समासे उद्देश्यविधेय-भावेनान्वयाभावः एकार्थीभावकृत इति प्रतिपादने तु नेति। प्रथमभक्ष इत्यत्र अन्येन प्रकारेण समाससाधनपरभूषणग्रन्थात् समासे उद्देश्यविधेयभावो न स्वीक्रियत कौण्डभट्टेनेति तदभिप्रायः प्रतीयते। हरदत्तस्तु उद्देश्यविधेयभावस्य स्फुटं प्रतिपत्त्यर्थं समासो न कर्तव्य इत्यभिप्रैतीति तद् ग्रन्थात् स्पष्टमेव अवगम्यते। एतत्सान्दर्भिकस्य नागेशभट्ट-ग्रन्थस्य प्राचीनाशयप्रकटन एव तात्पर्यम्। पूर्वोपदर्शितकौण्डभट्ट-हरदत्तग्रन्थयोः दर्शनेन ईदृशेऽन्वये समासे कृते असाधुत्वभ्रमः स्यादिति तद्वारणमेव एतद्ग्रन्थप्रयोजनम्। अत एव तेन स्पष्टमुक्तम्-समासे तथान्वये नासाधुत्वम्, भाष्यानुक्तत्वादित्यादि। अत एव काव्यप्रकाशकारादिभिः अविमृष्टविधेयांशदोषत्वेनैवायं विषय उदाहृतः, न तु च्युतसंस्कृतिदोषत्वेनेति। तद्भङ्गेन सहृदयहृदयोद्वेगाद् अयं दोष इति तत्तात्पर्यं नागेशभट्टेन सुष्ठु प्रकाशितम् इति। शम्।

**यदत्र सौष्ठवं किञ्चित् तद्गुरोरेव मे न हि।**
**यदत्रासौष्ठवं किञ्चित् तन्ममैव गुरोर्न हि॥**

**परिशीलितग्रन्थसूची-**


1. नागेशभावप्रकाशः (वैयाकरणसिद्धान्तलघुमञ्जूषायाः वृत्तिविचारस्य व्याख्या)-महामहोपाध्याय-आचार्य पेरिसूर्यनारायणशास्त्री, पाणिनीयप्रकाशनम्, तिरुपतिः, 2004।
2. वैयाकरणसिद्धान्तभूषणम्, निरञ्जनीव्याख्यया प्रकाशटिप्पण्या च सहितम्, तृतीयो भागः, सम्पादकः टिप्पणीकर्ता च महामहोपाध्याय-आचार्य-कं.वे. रामकृष्णमाचार्यः, फ्रेंच् इन्स्टिटिट्यूट्, पाण्डिच्चेरि-श्रीसोमनाथसंस्कृतविश्व-विद्यालयः, वेरावल, गुजरातम्, 2021।
3. काशिका (न्यास-पदमञ्जरी-भावबोधिनीसहिता)-ताराप्रिन्टिङ्ग् वर्क्स, वाराणसी, 1986।
5. वैयाकरणसिद्धान्तकौमुदी (तत्त्वबोधिनीसहिता)-चौखम्बासंस्कृतप्रतिष्ठानम्, नई दिल्ली, 2003.




# तपस्विनीमहाकाव्यस्योपरि रघुवंशोत्तररामचरितयोः प्रभावविमर्शः

डॉ. राजश्रीदाशः *

संस्कृतसाहित्येतिहासस्य समीक्षणात् ज्ञायते यत् संस्कृतवाङ्मये उत्कलीयविदुषां महद्योगदानं वर्तते। न केवलं कला-संस्कृति-आध्यात्मिकक्षेत्रेषु अपि तु संस्कृत-साहित्यक्षेत्रेषु प्रदेशस्यास्य स्थानं महत्त्वपूर्णं विद्यते। संस्कृतसाहित्यजगति अनेके उत्कलीया विद्वांसः स्वकीयविद्वत्ताबलेन प्रातःस्मरणीया अभवन् भवन्ति च। प्राचीनकालादारभ्येदानीं पर्यन्तं बहवः कवयः काव्यान्यनेकानि विरच्य सहृदयमनांसि रञ्जयन्तः यशांसि तन्वते।

तेषु उत्कलीयसंस्कृतसाहित्यप्रणेतृषु तपस्विनीमहाकाव्यस्य रचनाकारः पण्डितगङ्गाधरमेहेरः किमपि प्रामुख्यम् आधत्ते। तस्य कृतिषु विशिष्टतया काव्यधर्मो गूढोऽपि सामाजिकानां पाठकानां हृदयोपरि स्पन्दवृत्या साक्षाद् गूढतया अनुभवयो विद्यते। कविप्रवरस्य गङ्गाधरमेहेरस्य जन्म सम्बलपुरजिल्लायाः वरपाली-ग्रामे सामान्यपरिवारे अभवत्। दारिद्र्यकारणाद् यद्यपि तस्य आनुष्ठानिकशिक्षायां बहून्नतिः न सञ्जाता तथापि सः स्वचेष्टया हिन्दी-संस्कृतादि-बहुभाषासु ज्ञानमविन्दत। रसरत्नाकर-अहल्यास्तव-इन्दुमती-कीचकवध-प्रणयवल्लरी-तपस्विनी-काव्यादयः नैके ग्रन्थाः तेन विरचिताः। प्रारम्भिककाले स्वजीवनधारणार्थं प्रतिभासुरः कविः बहुकालं यावत् वस्त्रचयनकार्ये आश्रितोऽभूत्। परन्तु यदा कीचकवधकाव्यस्य प्रकाशमभवत् तदा सः समग्रोत्कलप्रदेशे विशिष्टकविरूपेण प्रतिष्ठां प्राप्तवान्। तेन रामायण-रघुवंशादिकाव्यग्रन्थेभ्यो वस्तूनि स्वीकृत्य स्वप्रतिभया उत्कलभाषायां 'तपस्विनी' इत्याख्येकादशसर्गीयं महाकाव्यमिदमकारि। तत्र च आदर्शनारीरूपेण भगवतीं सीतां केन्द्रीकृत्य काव्यमिदं ससर्ज।

लौकिकदृष्ट्या काव्यं दृश्यश्रव्यभेदेन द्विविधम्। अभिनययोग्यं काव्यं दृश्यम् इति कथ्यते यत् केवलं श्रोतव्यं श्रोतुं योग्यं न तु अभिनेयं तच्छ्रव्यकाव्यम् इत्युच्यते।[1] श्रव्यकाव्यं गद्यं, पद्यं, चम्पूश्चेतिभेदेन त्रिधा। श्रव्यं श्रोतव्यमात्रं तद्गद्यपद्यमयं

---

* सहायक आचार्या, श्री जगन्नायथ संस्कृत विश्वविद्यालयः, पुरी, ओडिशा।

1. दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्।
   दृश्यं तत्राभिनयम्। साहित्यदर्पण: 6/1

द्विधा।[1] यत्र छन्दोबद्धं पद्यं भवति तत्पद्यकाव्यम् इत्युच्यते। छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम्।[2] तत्र पद्यकाव्यमपि द्विविधं भवति–1–अनिबद्धकाव्यम् 2–प्रबन्ध–काव्यञ्चेति। यस्मिन् काव्ये सुनियोजितायाः कस्याः अपि दीर्घकथायाः समावेशो भवति तदेव प्रबन्धकाव्यमुच्यते। प्रबन्धकाव्यमपि महाकाव्यं खण्डकाव्यञ्चेति द्विविधं भवति। सर्गबन्धो महाकाव्यं भवति। तत्र नायकः धीरोदात्तगुणसम्पन्नो भवति। महाकाव्ये शृङ्गारवीरशान्तरसेषु एकस्य रसस्य प्राधान्यं भवति।[3]

तपस्विनीकाव्यस्य आकरभूतानां रामायण–रघुवंशोत्तररामचरितानां दृष्टानि समानानि समानाभिप्राययुक्तानि वाक्यान्यत्र प्रकाश्यन्ते। प्रत्येकं कविः प्राचीनैः कविभिरवश्यं प्रतिसंस्कृतो भवति। तस्य मनःपटले बाल्ये शिक्षाकाले गृहीताः वाक्यार्थाः अवश्यमेव तिष्ठन्ति। यदा कविः सामाजिकीं वा काञ्चिदन्यां स्थितिं विज्ञाय काव्यप्रणयने प्रवर्तते तदा तादृशा वाक्यार्थाः अहमहमिकया परापतन्ति। इह हि भारते देशे सन्ति सिद्धरसाः भारत–रामायणादयः सर्जनशक्तिपरिपाकविशेषाः काव्यग्रन्थाः तेषु सत्सु किं कविर्न गृह्णाति चार्थान्? अवश्यमेव तदेतत् सम्भवति। अस्मिन् अपि काव्ये ***तदेतन्मनसि निधाय*** अस्यां दिशि कश्चन मूलान्वेषणप्रयत्नः कृतः। तपस्विनीमहाकाव्ये श्रीरामचन्द्रेण अश्वमेधयज्ञः समनुष्ठितः। ततः सर्वेषां कृते निमन्त्रणं प्रदत्तम्। अत्र 'एकादशसर्गे' षड्विंशतिश्लोके अश्वमेधयज्ञार्थं श्रीरामेण कृतं निमन्त्रणं सूच्यते।

**राजा श्रीरामचन्द्रेण कृतमेतन्निमन्त्रणम्।**
**समनुष्ठितप्रख्यात–अश्वमेधस्य कारणात्।।**[4]

उत्तररामचरिते द्वितीयेऽङ्के आत्रेयवासन्त्योः रामविषयकसम्भाषणेन रामकर्तृका–श्वमेधयज्ञविषये ज्ञायते। रामः किमाचारः इति वासन्त्याः प्रश्ने सति तेन अश्वमेधः आरब्धः इति आत्रेयी उत्तरं प्रददाति। अत्र उभययोः कथोपकथनमाध्यमेन अश्वमेधयज्ञस्य अनुष्ठानं विधीयते इति ज्ञायते। अवसरेऽस्मिन् भवभूतिप्रणीतस्य श्रीरामचरितस्य प्रभावः गङ्गाधरमेहेरविरचिते तपस्विनीमहाकाव्ये परिलक्ष्यते। यथा–

**वासन्ती–अथ स रामभद्रः किमाचारः? आत्रेयी–तेन राज्ञा राजक्रतुरश्व–मेधः प्रक्रान्तः।**[5] काव्येऽस्मिन् एकादशसर्गे सीताभावेऽपि कनकनिर्मितां जानकीं संस्थाप्य रामेण अश्वमेधयज्ञः विहित इति स्पष्टं परिलक्ष्यते। चमत्कारितया प्रवर्तनमत्र दृश्यते काव्यसौन्दर्यं च परिलक्ष्यते। तदुक्तम्–

---

1. साहित्यदर्पणः 6/313
2. साहित्यदर्पणः 6/314
3. साहित्यदर्पणः 6/315
4. तपस्विनीमहाकाव्यम् 11/26
5. उत्तरामचरितम् द्वितीयोऽङ्कः पृष्ठः 136

**हेतवे सहधर्मिण्या अश्वमेधमखाय वै।**
**कानकी जानकी तेन रामेण सन्निधिं कृता॥**[1]

उत्तररामचरितस्य द्वितीयेऽङ्के भद्रपुरुषः श्रीरामः कस्मिन् कर्मणि व्यापृतः। तेन अश्वमेधः आरब्धः। न केवलं निरपराधा पत्नी निर्वासिताऽपि तु विवाहोऽपि कृतः इत्यपि प्रश्नो द्योतितः। का यज्ञे सहधर्मचारिणी निगद्यते। स्वर्णमयाजानक्याः प्रतिमूर्त्तिः धर्मपत्नीत्वेन गृहीता। यथा–

**वासन्ती– अथ स रामभद्रः किमाचारः?**

**आत्रयी– तेन राज्ञा राजक्रतुरश्वमेधः प्रक्रान्तः।**

**वासन्ती– अहह धिक्। परिणीतमपि?**

**आत्रेयी– शान्तम्! नहि नहि।**

**वासन्ती– का तर्हि यज्ञे सहधर्मचारिणी?**

**आत्रेयी– हिरण्यमयी सीताप्रतिकृतिर्गृहिणीकृता।**[2]

एवमेव उत्तररामचरितस्य तृतीयेऽङ्केऽपि सीतायाः अभावेऽपि तस्याः एकां स्वर्णमयीं प्रतिमूर्तिं निर्माय अश्वमेधयज्ञः विहितः इति उत्तररामचरिते वासन्त्याः सह सम्भाषणेन प्रदर्शितम्। यथा–

**श्रीरामः– अस्ति चेदानीमश्वमेधसहधर्मचारिणी मे।**

**सीता– आर्यपुत्र? का?**

**वासन्ती– परिणीतमपि किम्?**

**श्रीरामः– नहि नहि। हिरण्मयी सीताप्रतिकृतिः**[3]**।**

महर्षिवाल्मीकिविरचितस्य रामायणस्य वीणावादनलयपुरस्सरगानं तपस्विनी–महाकाव्ये दशमसर्गे वर्ण्यते। रामायणं मातुः सन्निधौ रामभक्तिरसे चेतः निर्मज्य चक्षुःशिरश्चालनपूर्वकं प्रेमतरङ्गकैश्च वीणातानलयमधुरस्वरेण लवकुशौ गायन्तौ विद्येते। यथोक्तम्–

**सूनुद्वन्द्वमदो महर्षिरचितं रामायणं सन्निधौ**
**मातुर्गायति रामभक्तिसुरसे निर्मज्य नैजं मनः।**
**वीणातानलयस्वरेण मधुरं संवादयञ्चास्थिरं**
**भूत्वा प्रेमतरंगकैश्च कुरुते चक्षुःशिरश्चालनम्॥**[4]

---

1. तपस्विनीमहाकाव्यम् 11/08
2. उत्तरामचरितम् द्वितीयोऽङ्कः पृ–136
3. उत्तररामचरितम् तृतीयोऽङ्कः पृ.284
4. तपस्विनीमहाकाव्यम् 10/20

एवमेव पूज्यवाल्मीकेः वाण्याः प्रवाहः, सूर्यवंशस्य चरित्रकीर्त्तनमिदं रामायणमिति श्रूयते। उत्तररामचरितस्य षष्ठाङ्केऽपि लवकुशाभ्यां रामायणस्य सूर्यवंशस्य प्रशस्तेः सवीणं कीर्त्तनञ्च श्रूयते। अनेन प्रकारेण अत्र उत्तररामचरितस्य षष्ठाङ्कस्य प्रभावः तपस्विनीकाव्ये एकादशसर्गे परिलक्ष्यते। यथोक्तम्–

**श्रीरामः– अये, तटस्थ आलापः। कृतं प्रश्नेन। मुग्धहृदय। कोऽयमाकस्मिकस्ते संप्लवाधिकारः? एवं निर्भिन्नहृदयावेगः शिशुजनेनाप्यनुकम्पितोऽसि। भवतु तावदन्तरयामि वत्सौ! रामायणं रामायणमिति श्रूयते भगवतो वाल्मीकेः सरस्वती निष्यन्दः। प्रशस्तिरादित्यवंशस्य तत्कौतूहलेन यत्किञ्चिच्छ्रोतुमिच्छामि**[1]

तपस्विनीमहाकाव्ये प्रथमसर्गे त्रिंशत्तमे पद्ये श्रीरामस्य मूर्च्छां दृष्ट्वा सीतायाः विलापः–प्राणेश, अभागिनी, दुःखसदा इत्यादिषु शब्देषु स्पष्टं परिलक्ष्यते। सीता स्वयं निन्दमाना आसीत्। अहं दुःखिनी इति। मम अभागिन्याः करं स्वीकृत्य अमुं कुलग्ने व्यदधाः। यस्मात् तव दारुणदुःखम् अस्ति इति। यथोक्तम्–

**प्राणेश! हेति करुणा-सरितां पते! हा**
**हा स्नेह-वारिधृगवोचत दुःखिनी सा।**
**क्वाऽभागिनीकरममुं व्यदधाः कुलग्ने**
**यस्मात्त्वमप्यसि निदारुणदुःखसदा।।**[2]

उत्तररामचरिते तृतीयेऽङ्के भगवतः श्रीरामचन्द्रस्य मूर्छितावस्थानन्तरं सीतायाः विलापः भवभूतिना वर्णितः। अतः अत्रापि उत्तररामचरितस्य काव्यसौष्ठवं तपस्विनी-महाकाव्यस्योपरि साक्षाद् अनुमातुं शक्यते। यथा–

**सीता–हा धिक्! हा धिक्। मां मन्दभागिनीं व्याहृत्यामीलितनेत्रनीलोत्पलो मूर्छित एवं हा! कथं धरणीपृष्ठे निरुद्धनिःश्वासनिःसहं विपर्यस्तः। भगवति तमसे! परित्रायस्व परित्रायस्व। जीवयार्यपुत्रम्।**[3]

तपस्विनीमहाकाव्ये प्रथमसर्गे जनरञ्जनार्थं प्रयोजनवशाद् वा यदि प्राणसमसीतायाः विसर्जनमपेक्ष्यते चेत् तदपि कर्त्तुं शक्नोमीति श्रीरामः प्रतिज्ञां करोति। यथोक्तम्–

**सीतां प्रयोजनवशाज्जनरञ्जनार्थं**
**प्राणैः समामपि विसर्जयितुं क्षमोऽस्मि।**

---

1. उत्तरामचरितम् षष्ठोऽङ्कः पृ.486
2. तपस्विनीमहाकाव्यम् 1/30
3. उत्तररामचरितम् तृतीयोऽङ्कः पृ–204

**मुन्यष्टवक्रमभितः किल भाषितं यत्**
**तत् संस्मरेः शिथिलयन् न हि तां प्रतिज्ञाम्।**[1]

उत्तररामचरिते प्रथमाऽङ्के जनस्यानुरञ्जनाय प्रेमभावं, करुणां, सुखञ्च एव न तु प्राणप्रियां सीतामपि त्यवत्रुं शक्नोमीति रामवाक्यं परिलक्ष्यते। प्रजाजनस्य आराधनाय भार्यादिविषयकम् अनुरणम्, गर्भिणीविषयां दयां, पुत्रमुखदर्शनलालनजातं च, सुखमथवा प्राणेभ्योऽपि प्रियां सीतामपि त्यजतः प्रजानुरञ्जकस्य रामस्य क्लेशः न विद्यते। प्राणाधिकायाः प्रियायाः सीतायाः अपि परित्यागेन प्रजानुरञ्जनं मेऽभीप्सितमित्यर्थः। यथा–

**स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।**
**आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा।।**[2]

तपस्विनीमहाकाव्ये प्रथमसर्गे सीता दुःखेन निदारुणदुःखसदा अभागिनी इत्यादिप्रकारेण आत्मानं तिरस्करोति। यथा–

**प्राणेश! हेति करुणा-सरितां पते! हा**
**हा स्नेह-वारिधिृगवोचत दुःखिनी सा।**
**क्वाऽभागिनीकरममुं व्यदधाः कुलग्ने**
**यस्मात्त्वमप्यसि निदारुण-दुःखसक्ष।।**[3]

भगवत्याः सीतायाः आत्मचिन्तितः तिरस्कारः कालिदासप्रणीते रघुवंशे चतुर्दशपद्ये वर्तते। तत्र सीता भर्तुः क्लेशवहाम् आत्मानम् अलक्षणां च उक्त्वा स्वश्वशुरस्य महिष्यौ भक्तिभेदं विना ववन्दे इति वर्ण्यते। एवं रघुवंशमहाकाव्यस्य तपस्विनीमहाकाव्ये छाया अस्ति इति वक्तुं शक्यते। यथा–

**क्लेशावहा भर्तुरलक्षणाऽहं सीतेति नाम स्वमुदीरयन्ती।**
**स्वर्गप्रतिष्ठस्य गुरोर्महिष्यावभक्तिभेदेन वधूर्ववन्दे।।**[4]

तपस्विनीकाव्ये एकादशसर्गे अश्वमेधयज्ञाय सीताभावेऽपि श्रीरामः स्वर्णमयीं सीतां निर्माय यज्ञं साधयामास। सुवर्णमय्याः जानक्याः प्रतिमूर्त्तिः अर्धाङ्गिनीत्वेन गृहीता। यथा–

**हेतवे सहधर्मिण्या अश्वमेधमखाय वै।**
**कानकी जानकी तेन रामेण सन्निधिं कृता।।**[5]

---

1. तपस्विनीमहाकाव्यम् 1/58
2. उत्तररामचरितम् 1/12
3. तपस्विनीमहाकाव्यम् 1/30
4. रघुवंशम् 14/5
5. तपस्विनीमहाकाव्यम् 11/108

रघुवंशमहाकाव्ये पञ्चदशसर्गे एकषष्टितमे पद्ये सीतायाः पातिव्रत्यमङ्गीकृत्य तस्याभावेऽपि हिरण्यमीं सीतां तत्स्थाने उपाविश्य यज्ञकार्यं निर्वर्तयति स्म। अनेन रघुवंशस्यापि प्रतिस्फुरणं तपस्विनीकाव्ये दृश्यते।

**श्लाघ्यस्त्यागोऽपि वैदेह्याः पत्युः प्राग्वंशवासिनः।**
**अनन्यजानेः सैवासीद्यस्माज्जाया हिरण्मयी।।**[1]

एवमेव रघुवंशे चतुर्दशसर्गे अन्तिमपद्ये इत्थमुक्तमस्ति यद् यज्ञसमये श्रीरामः अन्यां न उवाह, अपितु सीतायाः सुवर्णमयीं प्रतिकृतिं निर्माय यज्ञकार्यं समसाधयत। अत्र तपस्विनीकाव्ये जानकीवल्लभः सोऽयमन्यजायां तु नैच्छत् इत्यनेन समरूपत्वं भजते। तेन काव्यसौष्ठवं वरीवर्ति। यथोक्तम्–

**सीतां हित्वा दशमुखरिपुर्नोपयेने यदन्यां**
**तस्या एव प्रतिकृतिसखो यत्क्रतूनाजहार।**
**वृत्तान्तेन श्रवणविषयप्रापिणा तेन भर्तुः**
**सा दुर्वारं कथमपि परित्यागदुःखं विषेहे।।**[2]

तपस्विनीमहाकाव्ये दशमसर्गे विंशतितमे पद्ये श्रीरामभक्तिसुरसे निर्मज्ज्य सूनुद्वन्द्वं (लवकुशौ) महर्षिवाल्मीकिविरचितं रामायणाख्यं काव्यं प्रेमतरङ्गकैः मधुरं गायन्ति स्म इत्युपवर्णितम्। यथोक्तम्–

**सूनुद्वन्द्वमदो महर्षिरचितं रामायणं सन्निधौ**
**मातुर्गायति रामभक्तिसुरसे निर्मज्ज्य नैजं मनः।**
**वीणां तानलयस्वरेण मधुरं संवादयञ्चास्थिरं**
**भूत्वा प्रेमतरंगकैश्च कुरुते चक्षुःशिरश्चालनम्।।**[3]

रघुवंशे पञ्चदशसर्गे त्रिषष्टितमे श्लोके गुरोः वाल्मीकेराज्ञया मैथिलीतनयौ कुशलवौ रामायणं जगतुः इति वर्णितम्। अत्र प्राचीनकाव्यचमत्कारः तपस्विनीकाव्येऽपि फलितः। यथा–

**अथ प्राचेतसोपज्ञं रामायणमितस्ततः।**
**मैथिलेयौ कुशलवौ जगतुर्गुरुचोदितौ।।**[4]

काव्यसौन्दर्यं मनसि निधाय गङ्गाधरमेहेरः तपस्विनीकाव्ये चतुर्थसर्गे प्राह–सीतां प्रति चतुर्विंशतितमे पद्ये आश्रमेऽस्मिन् विद्यमानान् पादपान् स्नेहेन नन्दनसम्मितान् कुरु, येन अनुभूतिः सुतेषु नूनं भविष्यतीति वर्णनं परिलक्ष्यते। यथा–

---

1. रघुवंशम् 15/61
2. रघुवंशमहाकाव्यम् 14/87
3. तपस्विनीमहाकाव्यम् 10/20
4. रघुवंशमहाकाव्यम् 15/63

**सामीप्ये त्वद्भावमोचनकृते वृद्वाऽनुकम्पा चिरं**
**तिष्ठेन्नन्दिनि! यत्नतस्तव निजस्नेहश्रमैराश्रम।**
**वृक्षान् नन्दनसम्मितान् कुरु च तान् चेतानुभूतिस्तव**
**नूनं संभविता भवे सुतमर्णि? र्वाऽसौ कियद्दुर्लभः।।**[1]

स्वशक्त्यनुसारिभिः पयोघटैः आश्रमबालवृक्षान् संवर्धयन्ती पुत्रोत्पत्तेः प्राग् जलेन सिञ्चतु येन पुत्रेषु स्नेहेन 'कथं दुग्धं पाययितुं शक्यते' इति ज्ञास्यति। रघुवंशे चतुर्दशसर्गे अष्टसप्ततितमे पद्ये रघुवंशमहाकाव्यस्य प्रभावः तपस्विनीमहाकाव्ये परिलक्ष्यते। यथा-

**पयोघटैराश्रमबालवृक्षान् संवर्धयन्ती स्वबलानुरूपः।**
**असंशयं प्राक् तनयोपपत्तेः स्तनन्धयप्रीतिमवाप्स्यति।।**[2]

तपस्विनीमहाकाव्ये सीतायाः गर्भात् निशीथकाले निशामणिद्युतिहरौ यमजौ कुमारकौ (लवकुशौ) प्रजातौ इति वर्णनं परिलक्ष्यते। यथा-

**निशीथकालेऽथ निशामणिद्युति-**
**हरौ प्रजातौ यमजौ कुमारकौ।**
**कुमारयोस्तेज इहैव विद्युता**
**आलोकिकं दिग्दशकं चकार ह।।**[3]

रघुवंशे पञ्चदशसर्गे त्रयोदशपद्ये उच्यते यत् क्षितिः कोशदण्डौ इव सीता सुतौ असूत इति वर्णनं दृश्यते। यथोक्तं कालिदासेन-

**तस्यामेवास्य यामिन्यामन्तर्वत्नी प्रजावती।**
**सुतावसूत सम्पन्नौ कोशदण्डविव क्षितिः।।**[4]

तपस्विनीमहाकाव्ये सीतायाः दुःखावस्थामनुभूय मयूराः हरिण्यः हरिणाश्च आत्मगतं दुःखं प्रदर्शितवन्तः। सीतां व्याकुलितां रुदन्तीम् अवलोक्य वने मृगादयः नेत्रमूर्ध्वं कृत्वा आश्चर्येण अवलोकन्ते स्म इति। तदुक्तम्-

**तलेऽत्र दृष्ट्वा वनकेकिपुञ्जाः**
**निरीक्ष्यमां व्याकुलिता रुदन्तः**
**मृगैर्वने यूथशः ऊर्ध्वनेत्रै-**
**रथे निविष्टश्चकितावलोकः।।**[5]

1. तपस्विनीमहाकाव्यम् 4/24
2. रघुवंशमहाकाव्यम् 14/78
3. तपस्विनीमहाकाव्यम् 9/20
4. रघुवंशमहाकाव्यम् 15/13
5. तपस्विनीमहाकाव्यम् 7/20

रघुवंशमहाकाव्यस्य चतुर्दशसर्गे एकोनविंशतितमे श्लोके सीतायाः रोदनं निशम्य मयूराः नृत्यं त्यक्तवन्तः। वृक्षाः कुसुमपादतले रोदनं कृतवन्तः, हरिण्यश्च नेत्रात् अश्रुजलममुञ्चन्। सीतायाः समदुःखभावं दृष्ट्वा वनमपि अरुदत्। यथा–

**नृत्यं मयूराः कुसुमानि वृक्षा दर्भानुपात्तान्विजहुर्हरिण्यः।**
**तस्याः प्रपन्ने समदुःखभावमत्यन्तमासीद्रुदितं वनेऽपि॥**[1]

तपस्विनीमहाकाव्ये द्वितीयसर्गे त्रिपञ्चाशत्तमे श्लोके मुनेरागमनेन सीतायाः शोकनिवर्तनवर्णनं परिलक्ष्यते। तस्याः या चिन्ता आसीत् सा स्थगिताऽभवत्। तथोक्तं गङ्गाधरमेहेरेण–

**मुनेरागमने शोकं जानकी च न्यवर्तयत।**
**चिन्ताचक्रभावावर्तो हृदये स्थगितोऽभवत्॥**[2]

वाल्मीकेः आगमनं दृष्ट्वा सीता स्वविलापं त्यक्तवती। सीता दृष्टिप्रतिबन्धकमश्रु प्रसृज्य तं मुनिं ववन्दे। तेन च तस्याः गर्भचिन्हविशेषं दृष्ट्वा मुनिः तां "पुत्रप्रसूः भव" इति आशीर्वचनं रघुवंशे चतुर्दशसर्गे एकसप्ततितमे पद्ये निर्वर्ण्यते। यथोक्तं कालिदासेन–

**तमश्रु नेत्रवरणं प्रसृज्य सीता विलापाद्विरता ववन्दे।**
**तस्यै मुनिर्दोहदलिङ्गदर्शी दाश्वान्सुपुत्राशिषमित्युवाच॥**[3]

तपस्विनीमहाकाव्ये नवमसर्गे चतुष्षष्टितमे पद्ये ज्येष्ठकनिष्ठपुत्रयोः कुशलवयोः नामकरणं जन्मरहस्यं च वर्ण्यते। यथा–

**तद्देवाराधनाऽभूच्छ्रुतिमतविहिताः–शङ्ख–शिङ्गारवेण**
**ज्येष्ठं पुत्रं प्रसन्नो मुनिकुलतिलकवारिषं संवभासे**
**नाम्ना मृष्टः कुशेन प्रबलरिपुकरीन्द्राङ्कुशोऽयं कुशो-----**
**तद्वन्नूनं कनिष्ठो लव इति भुवने नामितः साधुवर्यैः।**[4]

वाल्मीकिप्रणीते रामायणे अष्टपञ्चाशत्सर्गे आदौ पञ्चमषष्ठपद्ययोः लवकुशयोः जन्मविषये तथा तयोः नामकरणविषये च सूच्यते। तथोक्तम्–

**यः तयोः पूर्वजो जातः सः कुशैः मन्त्रसंस्कृतैः**
**निर्मार्जनीयस्तु भवेत् कुश इत्यस्य नामतः।**[5]

---

1. रघुवंशमहाकाव्यम् 14/69
2. तपस्विनीमहाकाव्यम् 2/53
3. रघुवंशमहाकाव्यम् 14/71
4. तपस्विनीमहाकाव्यम् 9/64
5. रामायणम् 58/5

**यः चापरो भवेत् ताभ्यां लवेन सुसमाहितः**
**निर्माजनीयो वृद्धाभिः लवः चेति स नागतः।**[1]

तपस्विनीकाव्ये सीतां मानुषरूपरहितत्वेन भगवतीरूपत्वेन च वर्ण्यते। यथा–

**वसः संसिच्यते तस्या गलन्नयनवारिभिः।**
**देवी वा मानवी वाऽसौ सहजं न विशिष्यते।।**[2]

भगवत्याः सीतायाः अलौकिकरूपत्वं किमपि देवीरूपत्वं च रामायणे उत्तरकाण्डे अष्टचत्वारिंशत्सर्गे चतुर्थश्लोके वर्ण्यते। यथा–

**भगवन् साधु पश्येमां देवतामिव खात् च्युताम्।**
**न ह्येनां मानुषीं विदमः सत्क्रियास्याः प्रयुज्यताम्।।**[3]

तपस्विनीमहाकाव्ये सीता एका आदर्शनारीरूपेण स्वस्थानम् अलङ्करोति। तपस्विनः प्रेम्णः आधारः भवति त्यागः, सहिष्णुता, संयमश्च। जगतः नारीसमाजस्य पतिभक्तेः महनीयो दृष्टान्तः सीतायामुपस्थितः। नारीजातेः सतीत्वम् एवं पतिव्रत्यरक्षार्थं कवेः गङ्गाधरस्य आदर्शः सर्वथा भारतीयसंस्कृतेः अनुकूल एव। तथा तस्य नारीचरित्रं पृथिव्याःनारीसमाजस्य च स्वभावस्योपरि प्रभावं स्थापयति। प्रकृत्याः परमोपासकः आदर्शनारीचरित्रस्य सुदक्षः च चित्रकरः कविः गङ्गाधरमेहेरः। वाल्मीकिः, कालिदासः, भवभूतिश्च तस्य कल्पनायाः चिरसहचराः। तपस्विनीकाव्ये सीतावर्णनं दृश्यते। प्रस्तुतकवौ वाल्मीकिरामायणम्, महाभारतम्, रघुवंशमहाकाव्यम्, तुलसीदासस्य रामचरितमानसश्चेत्यादीनां प्रभावः अनुभूतः। कालिदासस्य तथा भवभूतेश्च दायादरूपेण कविः गङ्गाधरमेहेरः स्वीकर्तुं शक्यः। अत्र भवभूतेः उत्तररामचरिते चित्रितायाः सीतायाः प्रतिच्छाया दृश्यते। कालिदासस्य, भवभूतेः प्रभावः तस्य तपस्विनीकाव्यस्योपरि दृश्यते।

तपस्विनीमहाकाव्यस्य वस्तुविषयकेनाध्ययनेन च गङ्गाधरमेहेरस्य प्रतिभा सम्यक् प्रकाश्यते। कस्याञ्चित् प्रादेशिकभाषायां प्रणीते काव्ये भारतदेशप्राणभूतायाः गीर्वाण्याः प्रभावः गीर्वाणभाषाप्रणीतकाव्यानां च प्रभावः तथा पृष्ठभूमिः कथं वाऽस्तीति अत्र ज्ञायते। प्रस्तुतकृतिः च प्रादेशिकभाषाप्रणीतानां काव्यानां जीवनदात्री, वस्तुप्रशस्तिः, नूतनविचाराणाम् उत्सः, संस्कृतकाव्यतरङ्गिणी, विचारनिर्झरणी चेति वर्तते काव्यस्यास्यविमर्शनेन समाकलयितुं शक्यते। रामायण–रघुवंशोत्तररामचरितेषु उपलभ्यमानानां तत्तत्प्रकरणानां तपस्विनीमहाकाव्येन सह साम्यं प्रदर्शितम्। सूक्ष्माति–

1. रामायणम् 58/6
2. तपस्विनीमहाकाव्यम् 2/40
3. रामायणम् 48/4

सूक्ष्मरूपेण परिशीलयामश्चेत् वाल्मीकिरचितस्य रामायणस्य कालिदासविरचितस्य रघुवंशस्य, भवभूति-प्रणीतस्य उत्तररामचरितस्य च प्रभावः गङ्गाधरमेहेरविरचिते तपस्विनीमहाकाव्ये सुतरां परिलक्ष्यते इति शम्।

**संदर्भग्रन्थसूची**


1. रघुवंशमहाकाव्यम्-महाकविकालिदासः, डॉ. श्रीकृष्णमणि त्रिपाठी, चौखम्बा सुरभारती प्रकाशन, वाराणसी, 2008
2. पण्डा उमाकान्त, तपस्विनी (संस्कृत अनुवादः) श्री लिङ्गराज चौधुरी, गोसाणि नूआग्राम मेन रोड, ब्रह्मपुर-1993
3. रामायणम्, वाल्मीकिः (अनुवादक-दास मार्कण्ड भुवनेश्वर, 1999
4. मेहेर गङ्गाधर, तपस्विनी (मूल उडिया) कटक, 2006
5. षडङ्गीकृष्णकेशव, तपस्विनी (संस्कृत अनुवादः) भुवनेश्वरः, 2001
6. साहित्यदर्पणः-श्रीविश्वनाथकविराजः, विमला हिन्दीटीका, श्रीशालिग्राम शास्त्री विरचित, मोतीलाल बनारसी दास, वाराणसी, 1992
7. उत्तररामचरितम्-भवभूतिः, चौखम्बा संस्कृत संस्थान, वाराणसी, 2002




# आचार्यकुन्तकमते वक्रोक्तेः भेदोपभेदविमर्शः

-डॉ. नीरजतिवारी*

**प्रस्तावना**

आचार्यकुन्तकस्य एकमात्रकाव्यशास्त्रग्रन्थः 'वक्रोक्तिजीवितम्' विद्यते। ग्रन्थेऽस्मिन् चत्वारोन्मेषाः सन्ति। अस्य ग्रन्थस्य सामान्यपरिचय अत्र प्रस्तूयते। अत्र प्रथमोन्मेषे कुन्तकाचार्येण काव्यस्य प्रयोजनं, काव्यलक्षणं, शब्दार्थसाहित्यविवेचनं कृत्वा सोदाहरणं प्रदर्श्य वक्रोक्तेः स्वरूपमभिहितम्। अनन्तरं साहित्यस्वरूपविवेचनोपरान्तं षड्प्रकार-वक्रतानां स्वरूपं संक्षिप्तं विवेचनं क्रियते।

संस्कृतवाङ्मये वक्रोक्तिशब्दस्य प्राचीनकालादेव प्रवृत्तिरवलोक्यते। तत्रादौ अथर्ववेदे वक्रोक्तिचर्चा लभ्यते। अत्र वक्र-वक्रा वा शब्दस्य कुटिलार्थे प्रयोगः बभूवः-

**अयं यो वक्रोक्तिपरूर्व्यङ्गे मुखानि वक्रा वृजिना कृणोषि।**[1]

अग्निपुराणे वक्रोक्तिचर्चा अग्निपुराणे यजुन्वक्रोक्त्योर्भेदेन द्विविधो काको वाक्यनामकस्य शब्दालङ्कारे काकुकाकु तथा भङ्गश्लेषयोर्भेदेन वक्रोक्तिः द्विधा स्वीक्रियते। अत्र वक्रोक्ति वाक्छलस्यरूपेण प्रयुज्यते-

उक्तः प्रत्युक्तिमद्वाक्यं द्विधैव

**मत् ऋजुवक्रोक्तिभेदेन तत्राद्यं सहजं वचः।**
**वक्रोक्तिस्तु भवेद भङ्गया काकुस्तेन कृता द्विधा।।**[2]

**विषयप्रवेशः-**

**वक्रोक्तिस्वरूपम्-**

काव्यलक्षणप्रतिपादने वक्रोक्तिजीविते कुन्तकाचार्येण शब्दार्थयोः काव्यत्वं

---

* असिस्टेंट प्रोफेसर, साहित्यविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः लखनऊपरिसरः, विशालखण्डः 4, गोमतीनगरम् लखनऊ, 226010

1. अथर्ववेदः-7.58.4.7
2. अग्निपुराणम्-अ. 342.32-33

स्वीकुर्वता। उक्तं यथा–

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।**[1]

तत्रादौ विचार्यते वक्रोक्तिः किमुच्यते? शास्त्र अथवा लोकप्रसिद्धेः उक्तिभ्यां अतिशायिनी विचित्रमेव उक्तिः वक्रोक्तिः कथ्यते–**"वक्रोक्तिः प्रसिद्धाभिधान-व्यतिरेकिणी विचित्रैवाभिधा।"**[2] इयं वक्रोक्तिः किदृशा भवति एतस्मिन् विषये लिखितं खलु **"वैदग्ध्यभङ्गीभणितिस्वरूपं"** भवति। अर्थात् काव्यकुशलतायाः विच्छित्तिः माध्यमेन क्रियमाणकथनस्य उक्तिं वक्रोक्तिः कथ्यते। एवम् इदं कथनं शोभातिशयकाररित्वात् कारणात् एकमात्रं अलङ्कारं विद्यते–**"शब्दार्थौ पृथगवस्थितौ केनापि व्यतिरिक्तेनालङ्करणेन योज्येते किन्तु वक्रतावैचित्र्ययोगितयाभिधान-मेवानयोरलङ्कारः तस्यैव शोभातिशयकारित्वात्।"**[3]

**वक्रोक्तिर्लक्षणम्–**

कुन्तकाचार्येण वक्रोक्तिर्लक्षणं एवं प्रतिपादितम्। यथा–

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।**[4]

शब्दार्थो अलङ्कार्थो स्तः। पुनः द्वयोः शब्दार्थयोः अलङ्कृतिः लोकोत्तर-चातुर्यपूर्णोक्तिः इति वक्रोक्तिरेव कथ्यते।

**वक्रोक्तिर्भेदाः-**

कुन्तकाचार्येण वक्रोक्तेः षड्भेदा : प्रतिपादिताः। तद्यथा–

**कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षड्।**
**प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः।।**[5]

अर्थात् वर्णविन्यासवक्रता, पदपूर्वार्द्धवक्रता, पदपरार्द्धवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रता चेति संज्ञिताः षड्विधवक्रोक्तयः प्रकाशिताः। तेन प्रत्येकस्य भेदस्यानैके भेदाः वर्णिताः।

---

1. वक्रोक्तिजीवितम्–1.7
2. वक्रोक्तिजीवितम्–1.10 वृत्तिः
3. वक्रोक्तिजीवितम्–1.10 वृत्तिः
4. वक्रोक्तिजीवितम्–1.10
5. वक्रोक्तिजीवितम्–1.18

तन्मतानुसारं षट्सु वक्रोक्तिप्रकारेषु प्रत्येकस्य बहवो भेदाः सन्ति–

**वर्णविन्यासवक्रत्वं पदपूर्वार्द्धवक्रता।**
**वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः॥**

**वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति॥**

**वक्रभावः प्रकरणे प्रबन्धे वाऽस्ति यादृशः।**
**उच्यते सहजाहार्य सौकुमार्यमनोहरः॥**[1]

**वक्रोक्तेर्भेदोपभेदाः–**

**1. वर्णविन्यासवक्रता–**

अत्र प्रथमो भेदस्तु वर्णविन्यासवक्रता वर्णानां विन्यासो इति वर्णविन्यास-वक्रता'। एषा वक्रता अक्षराणां वर्णानां वा विन्यासे निवसति। अलङ्कारशास्त्रस्य अन्यैः विद्वद्भिः अनुप्रासयमकालङ्कारयोर्मध्ये येषां विषयाणां निरूपणं कृतमस्ति।

तेषां विवेचनमेतद्वर्णविन्यासवक्रताऽन्तर्गतमागच्छति। वर्णविन्यासवक्रतायाः उपभेदाः इमे दश सन्ति। यथा–एकवर्णविन्यासवक्रता, द्विवर्णविन्यासवक्रता, बहुवर्ण-विन्यासवक्रता, वर्गान्तयुक्तस्पर्शवक्रता, द्विरुक्तास्तलनादः विन्यासवक्रता, रादिसंयुक्तवर्ण-विन्यासवक्रता, व्यवधानरहितैकवर्णविन्यासवक्रता, व्यवधानरहितद्विवर्णविन्यासवक्रता, व्यवधानरहितबहुवर्णविन्यासवक्रता, समानवर्णान्यर्थयुक्तवक्रता चेति। एतेषां उपभेदानां क्रमेण विवरणं इत्थमस्ति। तद्यथा–

1. **एकवर्णविन्यासवक्रता**– यत्र कविः एकवर्णस्यावृत्तिः करोति तत्र वक्रतेयं वर्तते।[2]
2. **द्विवर्णविन्यासवक्रता**– यत्र कविना समवर्णद्वयस्यावृत्तिः क्रियते तत्र द्विवर्ण-विन्यासवक्रता।[3]
3. **बहुवर्णविन्यासवक्रता**– यत्र नैकानां वर्णानां स्वल्पान्तरावृत्तिर्भवति तत्र बहुवर्णविन्यासवक्रता।[4]
4. **वर्गान्तयुक्तस्पर्शवक्रता**– यत्र वर्गान्तयोगिनः स्पर्शवर्णस्य स्वल्पान्तरावृत्तिः वर्तते। तत्र वर्गान्तयुक्तस्पर्शवक्रता।[5]

---

1. वक्रोक्तिजीवितम्–1.19–21
2. वक्रोक्तिजीवितम्–2.1
3. वक्रोक्तिजीवितम्–2.1
4. वक्रोक्तिजीवितम्–2.1
5. वक्रोक्तिजीवितम्–2.2

5. **द्विरुक्तास्त-ल-नादयः विन्यासवक्रता**- यत्र स्वसंयोगवद्वर्णविशेषस्य स्वल्पान्तरावृत्तिः।[1]

6. **रादियुक्तवर्णविन्यासवक्रता**- यत्र रेफादिसंयुक्तवर्णविशेषस्य स्वल्पान्तरा वृत्तिः।[2]

7. **व्यवधानरहितैकवर्णविन्यासवक्रता**- यत्र एकवर्णस्यावृत्तिं विना व्यवधानेन भवति तत्र व्यवधानरहितैकवर्णविन्यासवक्रतास्ति।[3]

8. **व्यवधानरहितद्विवर्णविन्यासवक्रता**- यत्र व्यवधानेन द्विवर्णस्यावृत्तिः विना भवति तत्र व्यवधानरहितद्विवर्णविन्यासवक्रतास्ति।[4]

9. **व्यवधानरहितबहुवर्णविन्यासवक्रता**- यत्र व्यवधानरहितेन बहूनां वर्णानामा-वृत्तिः भवति तत्र व्यवधानरहितबहुवर्णविन्यासवक्रता।[5]

10. **समानवर्णान्यर्थयुक्तवक्रता**- यत्र समानवर्णानामावृत्तिः भवति परन्तु अर्थस्तु भिन्नः तत्र समानवर्णान्यर्थयुक्तवक्रतास्ति।[6]

**2. पदपूर्वार्द्धवक्रता-**

पदपूर्वार्द्धवक्रता पदस्य सुबन्तस्य तिङन्तस्य वा यत् पूर्वार्द्धप्रातिपदिकलक्षणं धातुलक्षणं वा तस्य वक्रता वक्रभावो विन्यासवैचित्र्यम्। तस्य च बहवः प्रकाराः सन्ति।

यथा-पर्याय-रूढि-उपचार-विशेषणं-संवृत्ति-वृत्ति-भाव-लिङ्ग-क्रियावैचित्र्य-पदमध्यान्तर्भूतप्रत्ययवक्रता-आगमवक्रतेति। पदपूर्वार्द्धवक्रतायाः एकादश भेदाः वर्तन्ते। यथा-रुढ़िवैचित्र्यवक्रता, उपचारवक्रता, संवृत्तिवक्रता, लिङ्गवैचित्र्यवक्रता, पर्यायवक्रता, विशेषणवक्रता, वृत्तिवैचित्र्यवक्रता, क्रियावैचित्र्यवक्रता, पदमध्यान्तर्भूतप्रत्ययवक्रता, भाववक्रता, आगमवक्रता चेति। एतेषां प्रकाराणां समासधिया परिचयः इत्थं सन्ति।

तद्यथा-

1. **रुढिवैचित्र्यवक्रता**- यत्र काव्ये वाच्यार्थस्य सर्वातिशायिनं तिरस्कारं प्रशंसनीयं प्रकाशयितुं कविः तादृशं प्रयोगं कुरुते येन रुढेरसंभाव्यधर्माध्यारोपगर्भत्वं

---

1. वक्रोक्तिजीवितम्-2.2
2. वक्रोक्तिजीवितम्-.2.2
3. वक्रोक्तिजीवितम्-.2.3
4. वक्रोक्तिजीवितम्-2.3
5. वक्रोक्तिजीवितम्-2.3
6. वक्रोक्तिजीवितम्-2.6-7

प्रतीयते तत्र रुढिवैचित्र्यवक्रता वर्तते।[1]

2. **पर्यायवक्रता**– पर्यायवक्रतायां कविवर्ण्यमानपदार्थस्य सौन्दर्यातिशयमभिव्यनक्तुं कमपि विशिष्टं पर्यायशब्दं प्रयुङ्क्ते।[2]

3. **उपचारवक्रता**– यत्र कविभिः अत्यन्तभिन्नस्वभावपदार्थधर्मस्य परस्पराल्प–साम्याधारे तस्य लोकोत्तरसौन्दर्यं प्रस्तौतुं आरोप्यते। सा उपचारवक्रताऽस्ति। यथा– अमूर्त्तपदार्थस्य मूर्त्तपदार्थेन तथा अचेतनपदार्थस्य चेतनपदार्थेन कथनं उपचारवक्रतायां सम्प्राप्यते। रूपकालङ्काराणां रूपे वक्रतेयं विलसति।[3]

4. **विशेषणवक्रता**– यत्र क्रियारूपं कारकरूपं वा पदार्थसौन्दर्यं तस्य विशेषण–माहात्म्येन समुल्लसति अर्थात् विशेषणस्य माहात्म्यात् क्रियायाः कारकस्य वा लावण्यमुल्लसति सा विशेषणवक्रतेति।[4]

5. **संवृत्तिवक्रता**– यत्र विशिष्टसर्वनामशब्दप्रयोगेन पदात् स्वरूपवैचित्र्यं उत्पद्यते तत्र संवृत्तिवक्रता भवति।[5]

6. **पदमध्यान्तर्भूतप्रत्ययवक्रता**– यत्र पदमध्ये प्रयुक्तः कश्चित् कृतादिप्रत्ययः प्रस्तुतस्य वस्तुन औचित्यविच्छित्तिं विकासयति तत्र पदमध्यान्तर्भूत प्रत्ययवक्रता वर्तते।[6]

7. **वृत्तिवैचित्र्यवक्रता**– यत्र अव्ययीभावसमासप्राधान्यात् पदपूर्वार्द्धस्य वक्रभावः उत्पद्यते तत्र वृत्तिवैचित्र्यवक्रतास्ति।[7]

8. **भाववक्रता**– अत्र भावस्यार्थः 'क्रिया' अस्ति। क्रिया सदैव साध्यरूपा भवति। यत्र क्रियाबोधकधात्वर्थस्य वैचित्र्यप्रकारान्तराभिधानव्यतिरेकिणी रमणीयतां प्रस्तौति तत्र भाववक्रता विद्यते।[8]

9. **लिङ्गवक्रता**– यत्र विशिष्टलिङ्गप्रयोगे काव्ये रमणीयता समायाति तत्र लिङ्गवक्रतास्ति।[9]

---

1. वक्रोक्तिजीवितम्–2.8–9
2. वक्रोक्तिजीवितम्–2.10–12
3. वक्रोक्तिजीवितम्–2.13–14
4. वक्रोक्तिजीवितम्–2.15
5. वक्रोक्तिजीवितम्–2.16
6. वक्रोक्तिजीवितम्–2.17
7. वक्रोक्तिजीवितम्–2.19
8. वक्रोक्तिजीवितम्–2.20
9. वक्रोक्तिजीवितम्–2.21–22

10. **क्रियावैचित्र्यवक्रता**- क्रियाया अर्थोऽस्ति 'धात्वर्थः' अस्याः वैचित्र्योत्पन्न-वक्रता अनेकरूपाः विद्यन्ते। क्रियावैचित्र्यवक्रतायाः भेदाः विशेषणवैचित्र्यमुपचारमनोज्ञाता कर्मादिसंवृत्तिरिति।[1]

11. **आगमवक्रता**- यत्र आगमादीनां विलासेन रमणीयाऽपरभेदविन्यासस्य-सौन्दर्योत्पाद्यमानशब्दवक्रतां पोषयति। तत्रागमवक्रतेति मन्तव्या।

**3. पदपरार्द्धवक्रता-**

पदपरार्द्धवक्रताया अपरनाम प्रत्ययवक्रताऽपि वर्तते। पदस्य द्वयोः भागयोः परार्द्धभागः प्रत्ययः कथ्यते। एते उपभेदाः कालवैचित्र्यवक्रता, कारकवक्रता, सङ्ख्यावक्रता, पुरुषवक्रता, उपग्रहवक्रता, प्रत्ययवक्रता, उपसर्गवक्रता, निपातवक्रता चेति अष्टधा सन्ति। अत्र काल-कारक संख्या-पुरुष-उपग्रह-प्रत्यय उपसर्ग-निपात-वक्रतानां संक्षिप्तपरिचयः इत्थं वर्तते। तद्यथा-

1. **कालवैचित्र्यवक्रता**- यत्र कालः औचित्यस्यात्यन्तरङ्गत्वात् रम्यत्वमश्नुते कविः। तत्र कालवैचित्र्यवक्रता। अर्थात् कविः भूतकालिकघटनानां वर्तमाने रूपान्तरितं करोति।[2]

2. **कारकवक्रता**- वैचित्र्यस्याधारः कारकः वर्तते, यत्र कविः- सामान्य-कारकस्य मुख्यरूपेण मुख्यकारकस्य च सामान्यरूपेण वर्णनं करोति तत्र कारकवक्रता विराजते।[3]

3. **संख्यावक्रता**- यत्र कवयः काव्येषु वैचित्र्योत्पादनेच्छापरिभूय संख्यासु वचनेषु वा परिवर्तनं कुर्वन्ति तत्र संख्यावक्रताऽस्ति। संख्यावक्रताया अपरनाम वचनवक्राप्यस्ति। अर्थात् एकवचनस्य द्विवचनस्य वा स्थाने बहुवचनं प्रयुङ्क्ते।[4]

4. **पुरुषवक्रता**- यत्र कविभिः काव्यसौन्दर्यदर्शनाय उत्तमपुरुषस्य मध्यमपुरुषस्य वा स्थाने अन्यपुरुषः प्रयुज्यते, सा पुरुषवक्रताऽस्ति।

5. **उपग्रहवक्रता**- यत्र कविभिरौचित्यवशात् सौन्दर्यदर्शनाय परस्मैपदात्मने पदयोरेकः विशिष्टरूपे प्रयुज्यन्ते तत्र उपग्रहवक्रता विलसति।[5]

---

1. वक्रोक्तिजीवितम्-2. 24-25
2. वक्रोक्तिजीवितम्-2.26
3. वक्रोक्तिजीवितम्-2.27-28
4. वक्रोक्तिजीवितम्-2.29
5. वक्रोक्तिजीवितम्-2.31

6. **प्रत्ययवक्रता**– यत्र काव्ये प्रत्ययेन आह्लादकारीचमत्कारः उत्पद्यते सा प्रत्ययवक्रता विद्यते।[1]

7. **उपसर्गवक्रता**– यत्र वाक्यैकप्राणरूपेण काव्ये निबद्धरसः उपसर्गनिताभ्यां प्रकाशते सा पदवक्रता। पदवक्रताऽन्तर्गतं उपसर्गवक्रताया वर्णनं क्रियते, यत्र काव्ये उपसर्गप्रयोगेण चमत्कारोत्पद्यते सा उपसर्गवक्रता।[2]

8. **निपातवक्रता**– निपातशब्दस्य कोऽप्यर्थः नास्ति। कुशलकविरस्या प्रयोगः रसोत्कर्षाय करोति, सा निपातवक्रतेति।[3]

**4. वाक्यवक्रता**–

सहस्रधावाक्यवक्रता सन्ति। वाक्यवक्रता वस्तुवक्रता नाम्नाऽपि ज्ञायते। वाक्यवक्रतायाः विविधभेदाः सन्ति। तृतीयोन्मेषे कुन्तकाचार्येण वक्रोक्तिजीवितस्य चतुर्थवाक्यवक्रतायाः भेदानां व्याख्या कृताऽस्ति। एवं पूर्वस्मिन् प्रकरणे वाक्यावयवानां यथासम्भवं वक्रभावं विचारयन् वाचकवक्रताविच्छित्तिप्रकाराणां दिक्प्रदर्शनं विहितवान्।

इदानीं वाक्यवक्रतावैचित्र्यमासूत्रयितुं वाच्यस्य वर्णनीयता प्रस्ताधिकृतस्य वस्तुनो वक्रतास्वरूपं निरूपयति, पदार्थावबोधपूर्वकत्वाद् वाक्यार्थावसिते।[4] यत्र कविभिः वर्ण्यमानं वस्तु स्वकीयसर्वोत्कृष्टभावरमणीयतायुक्तत्वे वक्रशब्दविन्यासपूर्वकं प्रस्तूयते सा वस्तुवक्रता पदार्थवक्रता वाऽस्ति।[5] **"वस्तुनो वर्णनीयता प्रस्तावितस्य पदार्थस्य यदेवं विधत्वेन वर्णनं सा तस्य वक्रता वक्रत्वविच्छित्तिः।"**[6] वाक्यवक्रतायाः सहस्रभेदाः भवितुमर्हन्ति। वाक्यवक्रताऽन्तर्ग नैकानाम् अलङ्काराणां समावेशो वर्तत्ते। कुन्तकाचार्येण पूर्वाचार्यैः कथितालङ्काराणां खण्डनं विधाय विंशतिरलङ्काराः स्वीकृताः। ते च सन्ति रूपक–अप्रस्तुतप्रशंसा–पर्यायोक्त–व्याजस्तुति–उत्प्रेक्षा–अतिशयोक्ति–उपमा–श्लेष–व्यतिरेक दृष्टान्त–अर्थान्तरन्यास–आक्षेप– ससन्देह–अपह्नुति–संसृष्टि–संकर–रसवत्–दीपक–सहोक्तिरिति।

**5. प्रकरणवक्रता**–

वक्रतानां भेदेषु पञ्चमो भेदः प्रकरणवक्रता। यस्यार्थः प्रबन्धस्यैकदेशः अर्थात् सम्पूर्णग्रन्थस्यान्तर्गतः एकविशिष्टवाक्यसमूहाश्रितः वर्ण्यविषयोऽस्यां प्रकरण–

1. वक्रोक्तिजीवितम्–2.32
2. वक्रोक्तिजीवितम्–2.33
3. वक्रोक्तिजीवितम्–2.33
4. वक्रोक्तिजीवितं तृतीयोन्मेषे प्रस्तावनायां पृ. 275
5. वक्रोक्तिजीवितम्–3.1
6. वक्रोक्तिजीवितम्–3.1 वृत्तिः

वक्रतायां प्रकरणसम्बन्धितविशिष्टतायाः विशेषविवेचनमाचार्यकुन्तकः कृतवान्। प्रकरण-वक्रतायाः नवभेदाः विद्यन्ते। ते च सन्ति-

पात्रप्रकृतिवक्रता, उत्पाद्यलावण्यवक्रता, उपकारकभाववक्रता, विशिष्ट-प्रकरणस्यातिरञ्जनवक्रता, प्रासङ्गिकप्रकरणवक्रता, अङ्गिरसनिष्यन्दनिकषवक्रता, अवान्तरवस्तुयोजनावक्रता, नाटकान्तर्गतनाटकवक्रता, सन्ध्याङ्गविनिवेशवक्रता चेति। एते नवोपभेदनां वर्णनं इत्थं वर्तते। तद्यथा-

1. **पात्रप्रवृत्तिवक्रता**- पात्रप्रवृत्तिवक्रताया अपरनाम भावपूर्वस्थितेरुद्भावना वक्रता। यत्र कविः प्रतिभया इतिहासप्रसिद्धकथापात्राणि चरित्रोत्कर्षमुत्पादयन्ति सा पात्रप्रवृत्तिवक्रताऽस्ति।[1]
2. **उत्पाद्यलावण्यवक्रता**- यत्रेतिहासप्रयुक्तकथायाः मार्गे कस्यचित् कल्पना-प्रसूतांशस्य रमणीयतया तस्य कथावस्तुनः किञ्चिदन्यदेव शोभते। तत्रोत्पाद्य-लावण्यवक्रताऽस्ति।[2]
3. **उपकार्योपकारकवक्रता**- उपकार्योपकारकवक्रतायां प्रधानकार्यस्यानुसंधानाय प्रबन्धस्यैकदेशीयानां प्रकरणानामनुग्राह्यनुग्राहकभावाद् रमणीयतामश्नुते सा अनुग्रहाकभाववक्रता भवति।[3]
4. **आवृत्तिवक्रता**- यत्र कविना प्रौढप्रतिभया एकैवकथायाः पुनर्पुनः रसालङ्काराभ्यां नूनतसौन्दर्यं प्रस्तूयते तत्रावृत्तिवक्रताऽस्ति। अस्या अपरनाम विशिष्टप्रकरण-स्यातिरञ्जनवक्रतेयमप्यस्ति।[4]
5. **प्रासङ्गिकप्रकरणवक्रता**- यत्र काव्यस्य सौन्दर्याय जलक्रीडादिवर्णनद्वारा विशिष्टचमत्कारोत्पन्नं क्रियते सा प्रासङ्गिकप्रकरणवक्रतेति।[5]
6. **प्रकरणरसवक्रता**- यत्र काव्ये पूर्वोत्तररससम्पाद्य कोऽपि प्रधानरसनिष्पन्दनिकषः परिलक्ष्यते सा प्रकरणरसवक्रतेति।[6]
7. **अवान्तरवस्तुवक्रता**- यस्मिन् प्रबन्धे मूलकथावस्तुनः सिद्ध्यर्थमन्यस्याः प्रधानकथाया उल्लेखो भवति, येन वैचित्र्यमपि समुत्पद्यते। साऽवान्तर-वस्तुवक्रताऽस्ति।[7]

---

1. वक्रोक्तिजीवितम्-1.2
2. वक्रोक्तिजीवितम्-4.3
3. वक्रोक्तिजीवितम्-4.5-6
4. वक्रोक्तिजीवितम्-4.7-8
5. वक्रोक्तिजीवितम्-4.9
6. वक्रोक्तिजीवितम्-4.10
7. वक्रोक्तिजीवितम्-4.11

8. **नाटकान्तर्गतनाटकवक्रता**- (गर्भाङ्कवक्रता) नाटकान्तर्गतमपरस्य नाटकस्य समावेशो 'गर्भाङ्क' इत्युच्यते। यत्र प्रकरणानां मध्ये सामाजिकाह्लादकुशलनटैः सामाजिकभूमिकायाः निर्वहणं विधाय नाटकान्तररूपं नियमोपस्थाप्यते, तत्र नाटकान्तर्गतनाटकवक्रता प्रतिपादिता कुन्तकाचार्येण।[1]

9. **सन्ध्यङ्गविनिवेशवक्रता**- यत्र कुन्तकाचार्येण मुखादिसन्धीनां सम्बन्ध-संविधानेन रमणीयमुत्तरपूर्ववर्तीनां सन्ध्यङ्गानां सन्निवेशनं लावण्यम् उल्लासयति। तत्र सन्ध्यङ्गविनिवेशवक्रतेति।[2]

**6. प्रबन्धवक्रता**-

प्रबन्धस्य अर्थोऽस्ति सम्पूर्णः दृश्यग्रन्थस्तथा श्रव्यकाव्यस्य ग्रन्थः प्रबन्धस्य सौन्दर्यकरणं तत्र विशिष्टोत्पादनमेव कवेः प्रधानं लक्ष्यं वर्तते। इयमेव वक्रता काव्ये अङ्गिरूपेण प्रामुख्येन वा वर्तते। प्रथमं पञ्चविधा वक्रता एतत्प्रबन्धवक्रताया अङ्गमात्रमेव विद्यते। आद्यवक्रतानां समस्तं लक्ष्यमस्यैव वक्रतायाः उत्पादनेऽस्ति। अङ्गशोभया एवाङ्गिनः शोभा भवति। अङ्गानां सौन्दर्येण अङ्गिनः सौन्दर्यं प्रस्फुटितं जायते। कविव्यापारस्य अङ्गिनः लक्ष्यं प्रबन्धवक्रताया एव सर्जनमस्ति।

प्रबन्धवक्रतान्तर्गते षड्भेदाः सन्ति यथा-रसपरिवर्तनवक्रता, समापनवक्रता, कथाविच्छेदवक्रता, आनुषङ्गिकफलवक्रता, नामकरणवक्रता, कथासाम्यवक्रतेति। एतेषां षड् उपभेदानां निरूपणं इत्थं सन्ति। तद्यथा-

1. **रसपरिवर्तनवक्रता**-यत्र कविः स्वकीयरचनायां प्रसिद्धस्य इतिवृत्तस्य मूलरसस्थाने अन्याह्लादकारिणः रसस्य प्रयोगं करोति।[3]

2. **समापनवक्रता**- यत्र कविः इतिहासप्रसिद्धस्य स्थाने कथावस्तुनः कस्मिन्नपि विशेषप्रसङ्गे स्वकीयरचनया जायते। तथा कथायाः मार्मिकस्थले कथायाः समापनं प्रबन्धनिबन्धनस्य विशिष्टो गुणो मन्यते तत्र प्रबन्धवक्रताऽन्तर्गतं समापनवक्रता वर्तते।[4]

3. **कथाविच्छेदवक्रता**- यत्र मध्ये विच्छिन्नात् नीरसतां गतायाः कथायाः केनापि आकस्मिकप्रसङ्गेन औत्सुक्यवर्धनं येन कार्यसिद्धिः रससञ्चारश्च वर्ण्यते तत्र कथाविच्छेदवक्रता भवति।[5]

---

1. वक्रोक्तिजीवितम्-4.12-13
2. वक्रोक्तिजीवितम्-4.14-15
3. वक्रोक्तिजीवितम्-4.16-17
4. वक्रोक्तिजीवितम्-4.18-19
5. वक्रोक्तिजीवितम्-4.20-21

4. **आनुषङ्गिकफलवक्रता**– यत्र एकस्य मुख्यफलस्य प्राप्त्यर्थं प्रयतमानस्य नायकस्य अन्येषामनेकफलानां प्राप्तिः भवति तत्र आनुषङ्गिकफलवक्रता विद्यते।[1]

5. **नामकरणवक्रता**– यत्र प्रबन्धस्य नामोच्चारणमात्रादेव समग्रकाव्यप्रबन्धस्य कथावस्तुनः ज्ञानं भवति तत्र नामकरणवक्रता विद्यते। अत्र कुन्तकस्याभिप्रायोऽयं वर्तते यद् ग्रन्थस्य नामकरणेऽपि वैचित्र्यमपेक्ष्यते इति।[2]

6. **कथासाम्यवक्रता**–यत्र एकस्या एव कथायाः विभिन्नकवयः विभिन्नरूपेण यदा वर्णनं कुर्वन्ति तदा चमत्कार उत्पद्यते। तत्र कथासाम्यवक्रता मिलति।[3]

**निष्कर्षः**–अनेनप्रकारेण कथयितुं शक्यते यत् वक्रोक्तिजीविते आचार्यकुन्तकेन प्रधानतया षट् वक्रोक्तिः वर्णानानन्तरं प्रत्येकस्य बहवः भेदाः वर्णिता सन्ति। तद्यथा– वर्णविन्यासवक्रतायाः उपभेदाः दश, पदपूर्वार्द्धवक्रतायाः एकादश, निपात-वक्रतायाः अष्ट, वाक्यवक्रतायाः सहस्र, प्रकरणवक्रतायाः नव एवं प्रबन्धवक्रतान्तर्गते षड्भेदाः वर्णिताः सन्ति। अतः वर्णविन्यासवक्रता, पदपूर्वार्द्धवक्रता, निपातवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रतादि षड् प्रमुखवक्रोक्तिभेदाः एव वक्रोक्ति-सिद्धान्तस्य मूलम् अस्ति। अत एव आचार्यकुन्तकस्य वक्रोक्तिजीवितं ग्रन्थमाश्रित्य-गवेषणमिदं वक्रोक्तेः भेदोपभेदपरिज्ञानेन सहैव अनुसन्धातृणां पाठकानां च कृते विमर्शमिदं नूनमेव सुपथप्रदर्शको भविष्यतीति।



1. वक्रोक्तिजीवितम्–4.22–23
2. वक्रोक्तिजीवितम्–4.24
3. वक्रोक्तिजीवितम्–4.25

# याज्ञवल्क्यप्रदत्तात्मज्ञानविमर्शः

डॉ. कृष्णा शर्मा*

**शोधसारांशः**- सनातनधर्मस्य वेदोऽस्ति मुख्याधारः। वेदानन्तरं स्मृतयः अस्माभिः स्वीक्रियन्ते। श्रुतिस्मृतिशास्त्रेष्वस्माकं प्राचीना विद्यार्थात् त्रयी-वार्ता-दंडनीतिः-आन्वीक्षिकी च निगूढास्सन्ति। आभिः विद्याभिः पुरूषार्थचतुष्टयस्य प्राप्तिर्भवति। मानवजीवनस्य मुख्योद्देस्य पुरूषार्थचतुष्ट्यस्य प्राप्तिरेव वर्तते। अस्मात् कारणात् श्रुतिस्मृतीनामध्यन-मावश्यकमस्ति किन्तु वेदाध्ययनं सर्वेषां कृते न सम्भवम्, स्मृतीनामध्ययनं सुलभं भवति। मनुयाज्ञवल्क्यानां प्रणीतानां स्मृतिप्रमुखानामध्ययनात् वेदविषयकज्ञानप्राप्तिर्भवति। अस्मिन्नेव क्रमे अत्र याज्ञवल्क्यप्रणीताया आध्यात्मिकशिक्षायाः विशदं परिचयं प्राप्स्यामः।

**कूटशब्दाः**- आध्यात्मिकशिक्षा, अध्यात्मः, आत्मज्ञानम्, आत्मस्वरूपम्, त्रीणि ऋणानि, आत्मज्ञानप्राप्तिः।

**प्रस्तावना**-

वैदिकपरम्परायां सनातनधर्मस्य वैशिष्ट्यस्य, भारतीयसंस्कृतेः वैशिष्ट्यस्य, वर्णधर्मप्रधानस्य, सदाचारपालनस्य, कर्मवादस्य, पुनर्जन्मवादस्य, आत्मज्ञानस्य, श्रुतिस्मृतीनां प्रामाण्यस्य, सत्यपरिपालनस्य, यज्ञमहत्त्वस्य, अहिंसापालनस्य, त्यागमहत्त्वस्य, तपोमयजीवनमहत्त्वस्य, मातृपितृगुरुभक्तेः, राष्ट्रभक्तेः, राष्ट्रहितस्य, इहलौकिकपारलौकिकभावनायाः, वर्णव्यवस्थायाः, आश्रमव्यवस्थायाः, राष्ट्रोन्नतेः, स्वोन्नतेश्च सर्वाः मूलभूतभावनाः समुपलभ्यन्ते एवञ्च सुस्पष्टं विवेच्यन्ते। वेदानां प्रामाण्यं सर्वैः स्वीक्रियते, यतो हि वेदस्य वेदाङ्गसहिताध्ययनं नैव सर्वेषां जनानां कृते यथावद् ज्ञानं सुकरमिति वेदविद्वद्भिः वेदानुगततदर्थाभिधायकस्मृतय उपनिबद्धाः। अतएव मन्यते अस्माभिः स्मृतिशास्त्रं, मनुना निगदितं च यत्-

**श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः।**
**ते सर्वार्थेश्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ।।**[1]

---

* सहआचार्या, धर्मशास्त्रविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः, जयपुरपरिसरः, जयपुरम्।

1. मनुस्मृतिः 2/10

स्मृतिशास्त्रे षड्विधधर्माणाम् यथा वर्णधर्म–आश्रमधर्म–वर्णाश्रमधर्म–नित्यधर्म–नैमित्तिकधर्म–साधारणधर्माणां वर्णनमस्ति। धर्मस्याशयो वर्तते स्वकर्त्तव्यपालनम्। मनुष्यः सोपानवत् स्वधर्मनिरतं भूत्वा धर्मार्थकाममोक्षप्रभृतीन् पुरुषार्थचतुष्टयान् प्राप्नोति। तत्र प्रथमः पुरुषार्थः प्रथमोऽभीष्टोऽपि च धर्म वर्तते। चेतनस्य स्वभावमस्ति यत् वर्तमानपरिस्थितौ सदैव न्यूनतायामनुभवति व उन्नयनप्राप्त्यर्थं च लालयति। आत्मोन्नति–प्राप्त्यर्थं स्वस्याभ्युदयमभिलषति। मानवस्य अभिलषितोन्नत्याः मुख्यसाधनं धर्मः वर्तते। अस्य विपरीतफलप्रदायकमधर्मः भवति। अतः सांख्यकारिकायामुक्तं यथा–

**धर्मेण गमनमूर्ध्वं गमनमधस्तात् भवत्यधर्मेण।**
**ज्ञानेन चापवर्गो विपर्यादिष्यते बन्धः॥**[1]

वायुपुराणेऽपि चोक्तं यथा–

**धारणाद् धृतिरित्यर्थाद् धातोरधर्मह प्रकीर्तितः।**
**अधारणेऽमहत्त्वे च अधर्म इति चोच्यते॥**[2]

इहलौकिकपारलौकिकाभ्युदयस्य च नाम धर्मः। धर्मात् मानवतायाः उन्नतिर्भवति। धर्मेण पुरुषार्थचतुष्टयं सिद्ध्यति। वैशेषिकसूत्रे महर्षिकणादेनोक्तं यत्–

**यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः।**[3]

प्राणिनां यः सर्वविधाभ्युदयमोक्षयोः साधनोऽस्ति स धर्मः। शास्त्रप्रतिपादित–सम्पूर्णाभीष्टानां व्यभिचारितोपायः धर्मः। सम्पूर्णजगतः कर्ता–धर्ता–हर्ता मुख्याधारः धर्मोस्ति। अर्थात् इहलौकिकपारलौकिकसुखप्राप्त्यर्थं धर्मरक्षणं पालनञ्चावश्यकम्।

कर्त्तव्यबोधनाय ज्ञानान्वेषणाय च सदैव धर्मशास्त्रे निमवग्नाः भवामो वयम्, अत अस्माकं प्राचीनस्मृतिशास्त्रेषु बहुनां विदुषाम् आध्यात्मिकशिक्षाविषये विचाराः पूर्वमेव प्रदत्ताः। आधुनिककालेऽपि तेषामध्ययनं कृत्वा धन्याः वयम्। महर्षिणा याज्ञवल्क्येनाऽपि स्वग्रन्थे आध्यात्मिकशिक्षायाः विवेचनम् कृतम्।

'अध्यात्म' इत्यस्य शाब्दिकार्थोऽस्ति आत्मनोऽध्ययनम् अर्थात् स्वान्वेषणम्। आत्मस्वरूपविषये याज्ञवल्क्येनोक्तं यत् **"यथा समस्तस्पर्शाः त्वचि केन्द्रीभूताः भवन्ति अथवा सम्पूर्णविचाराः मनसि निमग्नाः, भवन्ति तथैव सांसारिकप्रपञ्चाः आत्मनि केन्द्रिताः भवन्ति।"** अस्मात् कारणात् आत्मप्राप्तिरेव मानवीयप्रयत्नेषु महत्त्वपूर्णं ध्येयं वर्तते। अत एव याज्ञवल्क्यमुनिना अध्यात्मशिक्षाः निर्दिष्टाः ताः अत्र पञ्चबिन्दुरूपेण मया प्रस्तूयन्ते–

---

1. सांख्यकारिका कारिकासंख्या 44
2. वायुपुराणम् 57/58
3. वैशेषिकधर्मसूत्रम् 1/2

**(1) आत्मज्ञानस्याधिकारी**

**(2) आत्मज्ञानम्**

**(3) आत्मज्ञानोपायाः**

**(4) आत्मस्वरूपम्**

**(5) आत्मज्ञानप्राप्तिः**

**1. आत्मज्ञानस्याधिकारी**

आत्मज्ञानस्याधिकारी कः भवति? अस्य समाधानस्य विषये याज्ञवल्क्येनोक्तं यत्–

**अधीतवेदो जपकृत्पुत्रवानन्नदोऽग्निमान्।**
**शक्त्या च यज्ञकृन्मोक्षे मनः कुर्यात्तु नान्यथा॥**
**संनिरूद्धेन्द्रियग्रामं रागद्वेषौ प्रहाय च।**
**भयं हित्वा च भूतनाममृतीभवति द्विज॥**
**कर्तव्याशयशुद्धिस्तु भिक्षुकेण विशेषतः।**
**ज्ञानोत्पत्तिनिमित्तत्वात्स्वातन्त्र्यकरणाय च॥**[1]

अर्थात् वेदमधीत्य, जपं कृत्वा, पुत्रवान् भूत्वा, अन्नदानादि कृत्वा, अग्रिमान् भूत्वा यथाशक्तिनित्यनैमित्तिकादिनि अनुष्ठानानि कृत्वा मोक्षे मनः कुर्यात् नान्यथा। नान्यथापदस्यात्र आशयोऽस्ति यत्–

**ऋणानि त्रीण्यपाकृत्य मनो मोक्षेनिवेशयेत्।**
**अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥**[2]

त्रीणि ऋणानि संशोध्य मनो मोक्षे निवेशयेत्। तान्यृणानि त्वसंशोध्य मोक्षं चतुर्थाश्रममनुतिष्ठन्नरकं व्रजति। एषा व्यवस्था तु वैकल्पिकी भवितुं शक्नोति। यतो हि ब्रह्मचर्याश्रमादनन्तरं प्रव्रज्याविधिरपि विहितस्ति। जाबालिश्रुतौ विकल्पो दृश्यते निर्दिष्टं वर्तते तत्र– **''ब्रह्मचर्यं परिसमाप्य ग्रही भवेत्, ग्रही भूत्वा वनी भवेत्, वनी भूत्वा प्रव्रजेत्, यदि वेतरया ब्रह्मचर्यादेवप्रव्रजेत् गृहाद्वा वनाद्वा।''**[3] तथा च चक्षुरादीन्द्रियरूपादिविषयेभ्यः सम्यक् विनिवृत्य रागद्वेषौ प्रियाप्रियविषयौ त्यक्त्वा भूतानामपाकारेण–अभयमकुर्वन् शुद्धान्तःकरणः सन्नद्वैतसाक्षात्कारेणामृती भवति अर्थात् जीवः मुक्तो भवति। अतः विषयाभिलाषद्वेषजनितदोषस्य अन्तःकरणस्य शुद्धिः

1. याज्ञवल्क्यस्मृतिः प्रायश्चित्ताध्यायः 3/57,61,62
2. मनुस्मृतिः 6/35
3. मनुस्मृतिःकुलूकभट्टटीका 6/38

कल्मक्षयः प्राणायामैः कर्तव्याः। मनुनोक्तं यत्–

**दह्यन्ते ध्यायमानानां धातूनां हि यथा मलाः।**
**तथेन्द्रियाणां दह्यन्ते दोषाः प्राणस्य निग्रहात्।।**[1]

धातूनां धायमानानां मलद्रव्याणि दह्यन्ते एवं मनसो रागादयश्चक्षुरादेश्च विषयप्रवणत्वादयो दोषाः प्राणायामेन विषयानभिध्यानाद्दह्यन्ते। तस्मात् भिक्षुकेण त्वेषा शुद्धिर्विशेषतोऽनुष्ठेया। एतादृशः पुरूषः आत्मज्ञानस्य मोक्षस्य वा अधिकारी स्वीक्रियते।

**2. आत्मज्ञानम्**

**अवेक्ष्या गर्भवासाश्च कर्मजा गतयस्तथा।**
**आधयो व्याधयः क्लेशा जरारूपविपर्ययः।।**
**भवो जातिसहस्रेषु प्रियाप्रियविपर्ययः।।**[2]

अर्थात् स्वध्येयसिध्यर्थं वैराग्यस्यावश्यकता वर्तते। वैराग्यप्राप्त्यर्थं मूत्रपुरीषादि-पूर्णनानाविधगर्भवासागतयः पर्यालोचनीयाः। तथा च एकविंशतिः महारौरवादिनर-कादिदुःखविषये चिन्तनमावश्यकम्। तथा च आधयोः मनः पीडाः, शरीरस्य ज्वरादिव्याधयः अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः, जरा, रूपविपर्ययः, श्वसूकरखरोरगाद्यनेकजातिषु उत्पत्तिः इत्यादि बहुतरक्लेशावहं जगत्स्वरूपं पर्यालोच्य तत्परिहारार्थमात्मज्ञानोपाय भूतेन्द्रियजये प्रयतेत।

**3. आत्मज्ञानोपायाः**

याज्ञवल्क्यमुनिना आत्मज्ञानसिध्यर्थं साधनं दत्तम् यथा दर्पणो मलाच्छन्नो रूपज्ञानोत्पादनसमर्थो न भवति तथैव अविपक्वरणो रागादिमलाक्रान्तचित्तोऽपि आत्मबोधे समर्थः नास्ति। अतः चित्तवृत्तिनां निरोधं कृत्वा आत्मध्यानं कुर्यात्। उक्तं यत्–

**ध्यानयोगेन संपश्येत्सूक्ष्म आत्मात्मनि स्थितः।।**[3]

चित्तवृत्तिनिरोधेन आत्मैकाग्रतां कृत्वा ध्यानेन सूक्ष्मशरीरप्राणादिव्यतिरिक्तः क्षेत्रज्ञ आत्मा आत्मनि ब्रह्मण्यवस्थितः सम्यक् परोक्षी कुर्यात्। अतएव श्रुतौ "आत्मा वारे द्रष्टव्यः" इति साक्षात्काररूपं दर्शवमनूद्य तत्साधनत्वेन **"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"**[4] इति श्रवणमनननिदिध्यासनानि विहितानि। याज्ञवल्क्येन उपासनीयात्यस्वरूपं प्रतिपादितम् यत्–

1. मनुस्मृतिः 6/71
2. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/63,64
3. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/64
4. बृहदारण्यकोपनिषद् 5/4/5

**द्वासप्ततिसहस्राणि हृदयादभिनिःसृताः।**
**हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम्॥**

**मण्डलं तस्य मध्यस्य आत्मा दीप इवाचलः।**
**स ज्ञेयस्तं विदित्वेह पुनराजायते न तु॥[1]**

अर्थात् हृदयप्रदेशादभिनिःसृताः कदम्बकुसुमेकसरवत्सर्वतो निर्गता हिताहितेति संज्ञकाः द्वासप्ततिसहस्राणि नाड्यो भवन्ति। अपरास्तिस्रो नाड्यस्तासामिडापिङ्गलाख्ये द्वे नाड्यो सव्यदक्षिणपार्श्वगते हृदि विपर्यस्ते नासाविवरसंबद्धे प्राणापानायतने। सुषुम्नाख्यापुनस्तृतीया दण्डवन्मध्ये ब्रह्मरन्ध्रविनिर्गता। तासां नाडीनां मध्ये मण्डलं चन्द्रप्रभं तस्मिन्नात्मा निर्वातस्थदीप इवाचलः प्रकाशमान आस्ते स एवंभूतो ज्ञातव्यः। यतस्तत्साक्षात्करणादिह संसारे न पुनः संसरति अमृतत्त्वञ्च प्राप्नोति।

**4. आत्मस्वरूपम्-**

याज्ञवल्क्येन आत्मस्वरूपविषये प्रतिपादितम् यत्-

**निःसरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गकाः।**
**सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि॥[2]**

**आकाशमेकं हि यथा घटादिषु पृथग्भेवत्।**
**तथात्मा एको ह्यनेकश्च जलाधारेष्विवांशुमान्॥[3]**

**ब्रह्मखानिलतेजांसि जलं भूयश्च धातवः।**
**इमे लोका एष चात्मा तस्माच्च सचराचरम्॥[4]**

अर्थात् तप्तलोहपिण्डात् स्फुलिङ्गका निःसरन्ति तथैव परमात्मनो जीवात्माः प्रभवन्ति हि यस्मात् तस्मात्युज्यत एव जीवपरमात्मनो भेदव्यपदेशः। यथैकमेव गगनं कूपकुम्भाद्युपाधिभेदेन भिन्नं नानेवानुभूयते यथा वा भानुरेकोऽपि भिन्नेषु जलपात्रेषु करकमणिकमल्लिकादिषु नानेवानुभूयते तथैकोऽप्यात्मा अन्तःकरणोपाधिभेदेन भिन्नत्वं प्रतीयते। ब्रह्म, खम्, अनिलः, तेजः, जलम्, भूश्चेत्येते वातादि धातव एव शरीरं व्याप्य धारयन्तीति। तत्र पञ्चधातवः जडत्वं सन्ति तथा आत्माज्ञानमयं विद्यन्ते। एतस्या जडाजडसमुदायस्थावरजङ्गमात्मकं जगदुत्पद्यते। एतदेव हृदये दीपवत्प्रभुः स्थितोऽस्ति।

---

1. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/108,109
2. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/67
3. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/144
4. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/145

**5. आत्मत्तत्वप्राप्तिः-**

आत्मतत्त्वप्राप्त्यर्थं याज्ञवल्क्यमुनिना प्रतिपादितं यत्- आचार्यसेवा, सत्पुरूषसङ्गः, ललनालोकनालम्भयोः परित्यागः, परिग्रहाणां त्यागः, इन्द्रियाणां प्रवृत्तिनिरोधः, तन्द्रालस्ययोः त्यागः, सूक्ष्मप्राणिवधादिदोषपरामर्शः, बाह्यान्तःकरणसंयमः, वेदान्तार्थेषु विवेकित्वम्, तत्प्रतिपादितध्यानकर्मानुष्ठानम्, सर्वभूतेषु आत्मदर्शनम्, जीर्णकाषायधारणम्, शरीरपरिसंख्यानम्, रजस्तमोविधुरता, प्राणायामादिभिर्भावशुद्धिः एतैरूपायैः सम्यक् शुद्धः केवलसत्त्वयुक्तो ब्रह्मोपासनेनामृती भवेत् अर्थात् मुक्तो भवति। तथा चोक्तं-

**तत्त्वस्मृतेरूपस्थानात्सत्त्वयोगात्परिक्षयात्।**
**कर्मणां सन्निकर्षाच्च सतां योगः प्रवर्तते।।**[1]

अर्थात् आत्मतत्त्वं सदैव स्मरणात्, आत्मनि निश्चलोपस्थानात्, सत्त्वशुद्धियोगात्, केवलसत्त्वगुणयोगात्कर्मबीजानां परिज्ञानात्, सत्पुरूषाणां संङ्गात्, आत्मयोगः प्रवर्तते। तथा च याज्ञवल्क्येन मोक्षमार्गं प्रतिपादितं यत्-

**अनन्ता रश्मयस्तस्य दीपवद्यः स्थितो हृदि।**
**सितासिताः कर्बुरुपाः कपिला नीललोहिताः।।**[2]

**ऊर्ध्वमेकः स्थितस्तेषां यो भित्त्वा सूर्यमण्डलम्।**
**ब्रह्मलोकमतिक्रम्य तेन याति परां गतिम्।।**[3]

अर्थात् योऽसौ हृदि प्रदीपवत्स्थितो जीवस्तस्यानन्ता रश्मयो नाड्यः सुखदुःख-हेतुभूताः सितासितकर्बुरूपाः, कपिला, नीललोहितारूपाः, सर्वतः स्थितास्तेषामेको रश्मिरुर्ध्वव्यवस्थितः योऽसौ सूर्यमण्डलं निर्भिद्य हिरण्यगर्भनिलयं चातिक्रम्य वर्तते तेन जीवः परां गतिं प्राप्नोति अर्थात् तस्य इह संसारे पुनरागमनं न भवति।

निष्कर्षरूपेण ज्ञायते यत् इन्द्रियैः अथवा मनसा परमतत्त्वप्राप्तिरसम्भवा एव। तत् केवलं आत्मज्ञानेन प्राप्यते यतो हि आत्मा सत्यमस्ति, मनः इन्द्रियश्च साधनरूपेण प्रतीयते। मुनिनोक्तं यत् आत्मनः श्रवण-मनन-चिन्तनने आत्मतत्त्वस्य अनुभवः भविष्यति। आत्मतत्त्वानुभवेन अमृतत्त्वं प्राप्यते अस्य साक्षात्कारः केवलं मनसैव भवितुं शक्नोति उक्तं यत्-

***''मनसैवानुदृष्टव्यम्'' इति।***

---

1. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/160
2. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/166
3. याज्ञवल्क्यस्मृतिःप्रायश्चित्ताध्यायः 3/167

**संदर्भग्रन्थसूची-**


1. मनुस्मृतिः, हरगोविंद शास्त्री, चौखम्भासंस्कृतभवनम्, वाराणसी, 2011
2. याज्ञवल्क्यस्मृतिः प्रायश्चित्ताध्यायः, डॉ. कमलनयन शर्मा राजस्थान-संस्कृत-अकादमी जयपुरम्, 2016
3. बृहदारण्यकोपनिषद्, गीताप्रेस गोरखपुरम्, 2011
4. सांख्यकारिका, ईश्वरकृष्णविराचिता, ज्वालाप्रसाद गौड़, चौखम्भाविद्याभवनम्, वाराणसी, 2005
5. वायुपुराणम्, शिवजीत सिंह, चौखम्भाविद्याभवनम्, वाराणसी, 2018




# कमलाकरभट्टमते प्रातिपदिकार्थसूत्रे प्रातिपदिकार्थपरिमाणार्थौ

**डॉ. श्रीमन्तभद्रः***

**शोधसारः**

शाब्दिकेन कमलाकरभट्टेन विरचिते प्रथमादिविभक्त्यर्थप्रकाशके विभक्त्यर्थ-प्रकाशाख्ये अप्रकाशितग्रन्थे प्रथमाविभक्त्यर्थप्रकाशाय व्याख्याते 'प्रातिपदिकार्थलिङ्ग-परिमाणवचनमात्रे प्रथमा' (अष्टा.- 2.3.46) इति सूत्रे प्रातिपदिकार्थपरिमाणार्थौ विवृतौ वर्तेते। कैयटदीक्षितनागेशसिद्धान्तालोकेन विवृतयोरर्थयोः विमर्शः लघुशोध-बन्धेऽस्मिन्प्रस्तोष्यते।

**कूटशब्दाः**- प्रातिपदिकार्थः, प्रवृत्तिनिमित्तम्, परिमेयः, परिमाणम्, सत्ता, लक्षणा।

## 1. उपोद्घातः

वैयाकरणगोलिङ्गोपपदकमलाकरभट्टविरचितः प्रथमादिसप्तविभक्तीनामर्थप्रकाशकः अप्रकाशितः विभक्त्यर्थप्रकाशाख्यः स्वतन्त्रवृत्तिग्रन्थो विद्यते। अत्र पाणिनीयसूत्रक्रमं परित्यज्य प्रथमाद्वितीयेत्यादिक्रमेण विभक्त्यर्थप्रतिपादकानि विभक्तिविधायकानि सूत्राणि व्याख्याय तदनु कारकसूत्राणि व्याख्यातानि वर्तन्ते। तत्रप्रथमाविभक्त्यर्थप्रतिपादनाय प्रथमाविभक्त्यर्थबोधकं 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (अष्टा.- 2.3.46) इति सूत्रं व्याख्यातम्। सूत्रव्याख्यानावसरे कः प्रातिपदिकार्थः, कश्च परिमाणार्थः इति निरूपितं वर्तते। तौ युक्तावयुक्तौ वेति लघुशोधपत्रेऽस्मिन् समासेन परामृश्यते।

## 2. प्रातिपदिकार्थसूत्रार्थविचारः

प्रातिपदिकार्थश्च लिङ्गञ्च परिमाणञ्च वचनञ्चेति प्रातिपदिकार्थलिङ्गपरिमाण-वचनानि, प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येवेति अस्वपदविग्रहे मयूरव्यंसकादयश्च (अष्टा.- 2.1.72) इति नित्यसमासे प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रम् इति

---

* सहायकाध्यापकः विभागाध्यक्षश्च, स्नातकोत्तरसंस्कृतविभागः, राजानरेन्द्रलालखानमहिला-महाविद्यालयः (स्वयंशासितः)।

लभ्यते। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते इति न्यायेन मात्रशब्दस्य प्रत्येकमन्वयः। ततश्च 1. प्रातिपदिकार्थमात्रे प्रथमा 2. लिङ्गमात्रे प्रथमा 3. परिमाणमात्रे प्रथमा 4. वचनमात्रे प्रथमा इति चत्वारि वाक्यानि लभ्यन्ते। केवलानां लिङ्गादीनां प्रातिपदिकार्थं विना कुत्राप्यनुपस्थितेः "लिङ्गमात्रे प्रथमा" इत्यादिकं नोपपद्यते। अतः लिङ्गमात्राधिक्ये प्रथमा इत्येवं रूपेण व्याख्यातम्। ततश्च–

1. प्रातिपदिकार्थमात्रे प्रथमा
2. लिङ्गमात्राधिक्ये प्रथमा
3. परिमाणमात्राधिक्ये प्रथमा
4. वचनमात्रे प्रथमा

इति चत्वारि वाक्यानि लभ्यन्ते।

### 3. कः प्रातिपदिकार्थः?

प्रातिपदिकार्थमात्रे प्रथमाविधानात् कः प्रातिपदिकार्थः इति निरूपणीयः–

**एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा।**
**नामार्थ इति सर्वेऽमी पक्षाः शास्त्रे निरूपिताः॥** (वै.सि.का.– 25)

एकं– प्रवृत्तिनिमित्तम् अथवा व्यक्तिः, द्विकं– प्रवृत्तिनिमित्तं व्यक्तिश्च, त्रिकं– प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं च, चतुष्कं– प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं संख्या च, पञ्चकं– प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं संख्या कारकं च प्रातिपदिकार्थ इति एते सर्वे पक्षाः व्याकरणशास्त्रे प्रतिपादिताः। प्रवृत्तिनिमित्तपदेन प्रायेण जातिः गृह्यते।

कारिकायाम् एकपदेन जातेर्ग्रहणम्। तत्र प्रमाणं– 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' (अष्टा.– 1.2.58) इति भगवतः पाणिनेः सूत्रम्। यदि व्यक्तिः पदार्थः स्यात् तर्हि 'संपन्ना व्रीहयः' इत्यत्र व्यक्तिबहुत्वादेव बहुवचनं सिद्धमिति सूत्रं नापेक्षितम्। तथापि सूत्रकरणात् ज्ञायते यत् जातिः पदार्थः। ततश्च जातेरेकत्वात् एकवचनं प्राप्तं न बहुवचनम् इति तद्विधानार्थं सूत्रम् अपेक्षितम्।

एकपदेन व्यक्तेर्वा ग्रहणम्। तत्र प्रमाणं– 'सरूपाणामेकशेष एकविभक्तौ' (अष्टा.– 1.2.64) इति भगवतः पाणिनेः सूत्रम्। यदि जातिः पदार्थः स्यात् तर्हि जातेरेकत्वादेव एकस्य शब्दस्यैव प्रयोगः प्राप्तः इति सूत्रं नापेक्षितम्। तथापि सूत्रकरणात् ज्ञायते यत् व्यक्तिः पदार्थः इति। ततश्च व्यक्तेर्बहुत्वात् अनेकशब्दानां प्रयोगः प्राप्तः इति तद्वारणाय सूत्रम् अपेक्षितम्।

"न ह्याकृतिपदार्थकस्य द्रव्यं न पदार्थः, द्रव्यपदार्थकस्य वा आकृतिर्न पदार्थः। उभयोरुभयं पदार्थः। कस्यचित्किञ्चित्प्रधानभूतं किञ्चिद्गुणभूतम्। आकृति–

पदार्थकस्य आकृतिः प्रधानभूता, द्रव्यं गुणभूतम्। द्रव्यपदार्थकस्य द्रव्यं प्रधानभूत-माकृतिर्गुणभूता"[1] इति भाष्यवचनात् जातिः व्यक्तिश्चोभयं पदार्थः इत्याशयेन द्विकम् उच्यते।

'स्वमोर्नपुंसकात्' (अष्टा.-7.1.23) इति सूत्रेण नपुंसकार्थे वर्तमानात् प्रातिपदिकात् स्वमोर्लुग्विधानात् 'वाक्' इत्यादिषु स्त्रीत्वबोधकप्रत्ययाभावेऽपि स्त्रीत्वप्रतीतेः लिङ्गमपि प्रातिपदिकार्थः इत्याशयेन त्रिकम् उच्यते।

संख्याया नामार्थत्वादेव 'आदिर्ञिटुडवः' (अष्टा.- 1.3.5) इति सूत्रे आदिरित्यत्र बहुत्वे एकवचनं सिध्यति। संख्याया विभक्तिवाच्यत्वे सति आवापोद्वापाभ्यां जसं विना नामार्थबहुत्वप्रतीत्यभावापत्तिः। अतः संख्याया नामार्थत्वे चतुष्कपक्षः सिध्यति।

'दधि पश्य' इत्यादौ विभक्तिं विना शास्त्रमजानतां कर्मणो बोधोदयात् कारकमपि नामार्थः इति सिद्धः पञ्चकपक्षः।

### 4. कमलाकरमते प्रातिपदिकार्थः

प्रस्तुतसूत्रे प्रातिपदिकार्थत्वेन त्रिकपक्षस्य चतुष्कपक्षस्य पञ्चकपक्षस्य वा ग्रहणं क्रियते चेत् सूत्रे लिङ्गग्रहणं व्यर्थं स्यात्। यतोहि तेषु पक्षेषु लिङ्गं प्रातिपदिकार्थ एव। अतः प्रातिपदिकार्थत्वेनैव प्रथमासिद्धिः स्यात्। तथापि लिङ्गग्रहणात् ज्ञायते यत् त्रिकादिपक्षो नाश्रीयते इति। यदि एकपक्षस्य द्विकपक्षस्य ग्रहणं स्यात् तर्हि अव्ययेभ्यः प्रथमा न स्याद् इत्यभिप्रेत्य प्रातिपदिकार्थस्य पारिभाषिकत्वं प्रदर्शयन्नाह कमलाकरः- "इह प्रातिपदिकार्थत्वेन जातिगुणक्रियात्मा योऽर्थो न भवति नापि लिङ्गशक्तिसंख्यायोगी केवलं सन्नेव यथाव्ययार्थः स गृह्यते"[2] इति। सीदन्ति गच्छन्ति अनुयन्ति लिङ्गशक्ति-संख्याः अस्मिन् इति सत्त्वम्। तद्भिन्नं हि असत्त्वम्। एवम् असत्त्ववचनानाम् अव्ययानां लिङ्गशक्तिसंख्यायोगो नास्ति इति लब्धम्। तथाहि वार्तिकम्- 'अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात्' (म.भा.- 2.4.82 वा.-1) इति। एतेन अव्ययम् अलिङ्गम् इति आगतम्। अव्ययस्य अलिङ्गत्वम् असंख्यत्वं प्रतिपादितं भाष्ये- "स्त्रीनंपुसकत्वानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च। एतानर्थान् केचिद्वियन्ति केचिन्न वियन्ति। ये न वियन्ति तदव्ययम्"[3] इति। कारकयोगाभावं दर्शयति आथर्वणी श्रुतिः-

**सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।**
**वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥** (गो.ब्रा.-1.1.26) इति।

1. सरूपसूत्रभाष्ये, म.भा. (द्वितीयभागः), पृ.- 98-99
2. प्रातिपदिकार्थसूत्रव्याख्याने विभक्त्यर्थप्रकाशे
3. तद्धितश्चासर्वविभक्तिसूत्रभाष्ये, म.भा. (प्रथमभागः), पृ.- 355

त्रिषु लिङ्गेषु, सर्वासु च विभक्तिषु कारकेषु, सर्वेषु च वचनेषु एकत्वादिसंख्यासु यत्र व्येति विकारं न प्राप्नोति, किन्तु सदृशं सर्वदा एकप्रकारमेव तिष्ठति तदव्ययम्। तत्र यानि साधनप्रधानानि अव्ययानि तेषां कारकशक्त्यन्तरानावेशात् क्रियाप्रधानां च शक्तिसंबन्धाभावात् इति भावः। सत्त्ववचनानाम् अव्ययानां तु लिङ्गसंख्यायोगः, कारकयोगस्तु अस्त्येव। यथा-क्षीणे पुण्ये स्वः पतति, प्रातर्यजते इत्यादौ कर्मकार-कयोगोऽस्ति।

एवं "सीदन्त्यस्मिञ्जातिगुणक्रिया इति सत्त्वं द्रव्यमुच्यते"[1] इतिचादयोऽसत्त्वे (अष्टा.- 1.4.57) इति सूत्रभाष्यस्य प्रदीपे। तत्रैवोद्योते "सीदन्त्यस्मिन्निति। विशेषणत्वेनावतिष्ठन्तेऽस्मिन्नित्यर्थः"[2] इति। उक्तं च भाष्ये- "त्रयी च शब्दानां प्रवृत्तिः- जातिशब्दाः, गुणशब्दाः, क्रियाशब्दा"[3] इति। अर्थात् शब्दस्य प्रवृत्तिनिमित्तं जातिः, गुणः, क्रिया इत्येतेषु कश्चन भवति। पूर्वं प्रवृत्तिनिमित्तं जातिरिति प्राधान्येन व्यपदेशा भवन्ति इति न्यायेन प्रोक्तम्। यथा- गौरित्यत्र गोत्वजातिः प्रवृत्तिनिमित्तं प्रकारत्वेन अवतिष्ठते, शुक्लः इत्यत्र शुक्लत्वगुणः प्रवृत्तिनिमित्तं प्रकारत्वेन अवतिष्ठते, पाचकः इत्यत्र पाकक्रिया प्रवृत्तिनिमित्तीभूता प्रकारत्वेन अवतिष्ठते। एवं च जातिगुणक्रियाः विशेषणत्वेन अस्मिन् न अवतिष्ठन्ते इति असत्त्वम् अद्रव्यम् इति आगतम्। एवं च असत्त्वभूतानाम् अव्ययानाम् अर्थो जातिगुणक्रियात्मा न भवति इति लब्धम्। अव्ययानाम् अर्थः अस्ति इत्येव, स विशेषयितुं न शक्यते इति भावः। तदुक्तं प्रातिपदिकार्थसूत्रे पदमञ्जर्याम्- "अव्ययार्थो हि केवलमस्तीति शक्यते वक्तुम्, न पुनरीदृशस्तादृशः"[4] इति। एवं च असत्त्वभूतानाम् अव्ययानाम् अद्रव्यत्वात् जातिगुणक्रियाभिन्नत्वात् एकपक्षः द्विकपक्षो वा न युज्यते इत्यतः तेभ्यः प्रथमोत्पत्तिर्न स्यात्। एवं च अव्ययार्थस्य क्वापि अन्तर्भावाभावात् पारिभाषिकः प्रातिपदिकार्थो ग्राह्यः इति आयातम्। अतः प्रकृतसूत्रे प्रातिपदिकार्थत्वेन योऽर्थः सन्नेव केवलं न जात्यादिरूपो नापि पुंलिङ्गादिलिङ्ग-एकत्वादिसंख्या-कर्मत्वादिशक्तियोगी स विवक्ष्यते। तेन प्रातिपदिकार्थत्वेन अव्ययार्थस्य ग्रहणे न क्लेशः। ततश्च उच्चैः नीचैः इत्याद्यव्ययेभ्यः प्रथमा सिध्यति।

ननु गौः, शुक्लः इत्यादिभ्यः प्रातिपदिकार्थसूत्रे लिङ्गग्रहणात् गवादिषु लिङ्गस्य सद्भावात् लिङ्गमात्रे प्रथमा सिध्येत्, अव्ययेभ्यस्तु ज्ञापकात्सिद्धा इति प्रातिपदिकार्थ-पदग्रहणं सर्वथा न करणीयमिति लाघवमिति चेन्न। प्रातिपदिकार्थसूत्रे मात्रग्रहणात् न

---

1. म.भा. [प्रदीपः] (द्वितीयभागः), पृ.- 282
2. म.भा. [उद्द्योतः] (द्वितीयभागः), पृ.- 282
3. ऋलृक्सूत्रभाष्ये, म.भा. (द्वितीयभागः), 103
4. काशिका [पदमञ्जरी] (तृतीयो भागः), पृ.- 56

सिध्यति। तथाहि– मात्रग्रहणात् लिङ्गमात्रे प्रथमा इत्यर्थः फलति। मात्रग्रहणं च अवधारणार्थम्। पयोमात्रं व्रतयति इत्यत्र यथा। पय एव भुङ्क्ते नान्यत्। एवं यत्र लिङ्गमेवार्थः तत एव प्रथमा। तेन च स्त्री, पुमान्, नपुंसकम् इत्यादौ एव भवति। गवादिषु च लिङ्गापेक्षया जात्याद्यर्थः अधिकतया भासते इति न सिध्येत्। यदि चोच्यते यत् नात्र मात्रशब्दोऽवधारणार्थकः अपि तु व्याप्तिवचनः कन्यामात्रं वरयति इत्यत्र यथा। एवं लिङ्गमात्रे प्रथमा इत्यस्य लिङ्गमस्ति इत्येव प्रथमा भवतीति अर्थः। ततश्च गवादिशब्देभ्यः अपि सिध्यति इति चेन्न। व्याप्तिवचनत्वेन अत्र आश्रयितुं न शक्यते तथा सति 'वृक्षं पश्य' इत्यादावपि लिङ्गमस्तीति प्रथमा भविष्यति। ननु 'कर्मणि द्वितीया' इति बाधकं भविष्यति इति चेन्न, द्वितीया कर्मण्येव इति प्रत्ययनियमपक्षे कर्मणि द्वितीयाया अनियतत्वात् इति बोध्यम्। मूले 'लिङ्गमात्राधिक्ये तेन प्रथमाविधानात्' इत्यत्र प्रथमाविधानात् इत्यस्य तु प्रथमाया अविधानात् इत्यर्थो ज्ञेयः। यद्वा प्रथमाया विधानात् इति पक्षे सत्त्वापेक्षया लिङ्गमात्रं यत्र अधिकं भासते तत्रैव। एवमपि गवादिशब्देभ्यः न सिध्यति, सत्त्वलिङ्गापेक्षया जातिगुणादेरधिकार्थस्य भानात्।

एवं च गवादिशब्देभ्यः कथञ्चिदपि प्रथमा न सिध्यति इत्यतः पूर्वं निरूपितं पारिभाषिकं प्रातिपदिकार्थं परित्यज्य निष्कर्षरूपेण पारिभाषिकं प्रातिपदिकार्थं निरूपयन्नाह भट्टकमलाकरः– "अन्वयव्यतिरेकाभ्यां यस्य योऽर्थः प्रतीतो यमर्थं प्रातिपदिकं न व्यभिचरति येन विना प्रातिपदिकस्याप्रवृत्तिरिति यावत् स सर्वः प्रातिपतिकार्थः"[1] इति। यस्मिन् प्रातिपदिके उच्चारिते योऽर्थः नियतरूपेण उपतिष्ठते स प्रातिपदिकार्थः इति भावः। एवं च अव्ययेभ्यः गवादिशब्देभ्यः स्वाद्युत्पत्तिः भविष्यति। नियतरूपेण यः उपतिष्ठते स प्रातिपदिकार्थः इति स्वीकारात् सत्त्वमात्रार्थकेभ्यः जात्याद्यधिकार्थेभ्यः अपि प्रथमा सिध्यति। यतोहि अव्ययं सत्त्वमात्रार्थं गवादिशब्दश्च जात्याद्यर्थं नैव व्यभिचरतः।

## 5. प्रातिपदिकार्थविषयककमलाकरसिद्धान्तविमर्शः

अधुना प्रतिपदिकार्थसूत्रविषयकः कमलाकरभट्टसिद्धान्तः समासेन विमृश्यते। अन्वयव्यतिरेकाभ्यां यस्य योऽर्थः प्रतीयते, यमर्थं प्रातिपदिकं न व्यभिचरति इति वा स प्रातिपदिकार्थः इति कमलाकरभट्टः। "यमर्थं प्रातिपदिकं न व्यभिचरति स प्रातिपदिकार्थः"[2] इति ब्रुवाणः कैयटोऽपि तथैवाभिप्रैति इति विज्ञायते। "नियतोपस्थितिकः प्रातिपदिकार्थः"[3] इतिवदन् दीक्षितोऽपि तथा। नागेशस्तु विप्रतिपद्यते। तदुक्तं

1. प्रातिपदिकार्थसूत्रव्याख्याने विभक्त्यर्थप्रकाशे
2. प्रातिपदिकार्थसूत्रभाष्ये, म.भा. [प्रदीपः] (द्वितीयभागः), पृ.– 513
3 प्रातिपदिकार्थसूत्रवृत्तौ, वै.सि.कौ. (प्रथमोभागः), पृ.– 592

बृहच्छब्देन्दुशेखरे– "अत्र सूत्रे प्रातिपदिकार्थशब्देन प्रवृत्तिनिमित्तं, तदाश्रयश्चेत्येतावन्मात्रं गृह्यते"[1] इति। एतदभिप्रायेणैव वृत्तिकारेण "प्रातिपदिकार्थः सत्ता"[2] इत्युक्तम् इति नागेशोऽभिप्रैति। सत्ताग्रहणं प्रवृत्तिनिमित्तमुपलक्षयति। तदाश्रयः आक्षेपलभ्यः इति हेतोः न पृथगुपात्तः इति नागेशो वर्णयति। अत्र प्रातिपदिकार्थपदेन द्विकं प्रातिपदिकार्थ एव गृह्यते, अत एव भाष्यकृता लिङ्गग्रहणस्य फलरूपेण वृक्षशब्दः उदाहृतः।[3] यदि नियतोपस्थितिक एव प्रातिपदिकार्थः स्यात् तर्हि वृक्षशब्दात् पुंस्त्वस्य नियततया भानात् प्रातिपदिकार्थस्यैव उदाहरणरूपेण प्रस्तुतः स्यात्। एवं च कमलाकरमते अलिङ्गा नियतलिङ्गाश्च प्रथमवाक्यस्य, अनियतलिङ्गाश्च द्वितीयवाक्यस्योदाहरणम्। नागेशमते तु अलिङ्गा एव प्रथमवाक्यस्य, नियतलिङ्गा अनियतलिङ्गाश्च द्वितीय-वाक्यस्योदाहरणमिति भेदो द्रष्टव्यः। एवं भाष्यविरोधात् कमलाकरमतं तथैव कैयटदीक्षितयोर्मतम् अयुक्तमिति फलितम्।

### 6. कमलाकरमते परिमाणार्थः

कमलाकरभट्टेन परिमेयपरः परिमाणशब्दो गृहीतः। तदुक्तं– "एवं च खार्यादि-परिमिते व्रीह्यादौ यदा खार्यादयो वर्तन्ते तदा खार्यादिशब्दाः लौहं दारुमयं पात्रविशेषं न व्यभिचरन्ति, व्यभिचरन्ति तु व्रीह्यादिकमिति प्रातिपदिकार्थलिङ्गग्रहणेन न सिध्यति मेयस्याधिकस्यार्थस्य भानादिति परिमाणग्रहणम्"[4] इति। एवं परिमेयाधिक्ये प्रथमा इति तृतीयवाक्यार्थः। तथाहि – द्रोणो व्रीहिः, खारी व्रीहिः इत्यादौ द्रोणादिशब्दस्य द्रोणपरिमेयादि अर्थः। तथाहि द्रोणशब्दात् प्रातिपदिकार्थे प्रथमा विधीयते चेत् नामार्थयोरभेदः संसर्गः इति रीत्या द्रोणाभिन्नो व्रीहिरिति बोधापत्तिः स्यात्, प्रतीतिविरोधात् स अर्थः न युज्यते। एवं द्रोणपदस्य द्रोणपरिमेये लक्षणा स्वीकर्तव्या। तदा परिमेयार्थः आधिक्येन भासते, तत्रापि यथा स्यात् तदर्थं सूत्रे परिमीयतेऽसौ इति व्युत्पत्त्या निष्पन्नस्य परिमेयार्थकस्य परिमाणशब्दस्य ग्रहणम्। तच्च उपलक्षणम्। तेन लक्षणास्थले प्रथमा यथा स्यात् तदर्थं परिमाणग्रहणम् इति फलितम्।

### 7. परिमाणार्थविषयककमलाकरसिद्धान्तविमर्शः

एतावता मन्थनेन सूत्रे परिमाणशब्दः परिमेयार्थकः एव इति कमलाकरमतेन लब्धम्। "यदा मानमेयसंबन्धाद् व्रीह्यादौ द्रोणादयो वर्तन्ते तदा व्यभिचारान्नास्ति मेयस्य प्रातिपदिकार्थत्वम्"[5] इति कथनेन कैयटस्यापि तथैवाभिप्रायः इति गम्यते।

1. प्रातिपदिकार्थसूत्रव्याख्याने, बृहच्छब्देन्दुशेखरः (द्वितीयो भागः), पृ.– 791
2. प्रातिपदिकार्थसूत्रवृत्तौ, काशिका (तृतीयो भागः), पृ.– 56
3. "इदं तर्हि–कुमारीवृक्षः कुण्डमिति" – म.भा. (द्वितीयोभागः), पृ.– 513
4. प्रातिपदिकार्थसूत्रव्याख्याने विभक्त्यर्थप्रकाशे
5. प्रातिपदिकार्थसूत्रभाष्ये, म.भा. [प्रदीपः] (द्वितीयभागः), पृ.– 513

एवं द्रोणो व्रीहिः इत्यादौ द्रोणादयो शब्दा यदा द्रोणपरिमेयार्थे वर्तते तदा परिमेयाधिक्ये यथा प्रथमा स्यादित्येतदर्थं परिमाणग्रहणम्। दीक्षितस्तु इष्टशाब्दबोधाय परिमाणग्रहणमिति वदति। तत्प्रोक्तं प्रौढमनोरमायां– "न च प्रातिपदिकमात्रे प्रथमेहास्त्विति वाच्यम्, तथा सति परिच्छेद्यपरिच्छेदकभावस्य संसर्गविधया भानायोगात्, नामार्थयोरभेदसंसर्ग एव व्युत्पत्तेः"[1] इति। अर्थात् प्रातिपदिकार्थे प्रथमा विधीयते चेद् अभेदान्वयेन द्रोणाभिन्नो व्रीहिरिति बोधः स्यात्, तस्य च प्रतीतिविरोधात् द्रोणपदस्य द्रोणपरिच्छिन्ने लक्षणा स्यात्, ततश्च द्रोणाख्यपरिमाणविशेषपरिच्छिन्नो व्रीहिरिति बोधः स्यात्। परिमाणार्थे प्रथमा विधीयते चेत् प्रत्ययार्थस्य परिमाणसामान्यमिति बोधः स्यात्, ततश्च 'सामान्यविशेषयोरभेदान्वयः' इति न्यायानुरोधेन अभेदान्वये द्रोणाख्यपरिमाण–विशेषाभिन्नपरिमाणसामान्यमिति बोधः, ततः प्रत्ययार्थस्य परिमाणसामान्यस्य परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वये द्रोणाख्यपरिमाणविशेषाभिन्नपरिमाणसामान्यपरिच्छिन्नो व्रीहिरिति बोधो भवति। परिमाणार्थे प्रथमा न विधीयते चेत् परिमाणसामान्यघटितः शाब्दबोधो न स्यादिति भावः।

द्रोणः, आढकम् इत्यादिपरिमाणवाचकशब्देभ्यः प्रथमाविधानार्थं सूत्रे परिमाणग्रहणम् इति नागेशभट्टाः। प्रवृत्तिनिमित्तं तदाश्रयश्चेति द्विकं प्रातिपदिकार्थः इत्याश्रयणात् परिमाणविशेषवाचकात् द्रोणादिशब्दात् प्रातिपदिकार्थापेक्षया परिमाणस्याधिक्येन भानात् प्रातिपदिकार्थमात्रे प्रथमा न सिध्यति। अतः परिमाणग्रहणम्। परिमाणग्रहणस्य उदाहरणम्– द्रोणः इत्येव न तु द्रोणो व्रीहिरित्यपि फलितम्। अत एव भाष्यकृता द्रोणादिशब्दा एव परिमाणग्रहणस्योदाहरणरूपेण प्रस्तुताः– "द्रोणः खारी आढकमित्यत्रापि यथा स्यात्"[2] इति। तत्र लिङ्गस्य यथा द्रोणत्वावच्छिन्ने द्रोणादिशब्दजन्यप्रतीतौ विशेषणतया भानं तथा परिमाणस्यापि विशेषणतया भानम् इति बोध्यम्।

एवं कमलाकरमते कैयटमते च परिमेयाधिक्ये वर्तमानात् प्रातिपदिकात्स्वार्थे प्रथमाविधानार्थं परिमाणग्रहणम्, दीक्षितमते प्रातिपदिकार्थे वर्तमानात्प्रातिपदिकात् परिमाणार्थे प्रथमाविधानार्थं परिमाणग्रहणं, नागेशमते परिमाणाधिक्ये वर्तमानात् प्रातिपदिकात्स्वार्थे प्रथमाविधानार्थं परिमाणग्रहणमिति फलितम्।

पूर्वविहितपरामर्शेन कमलाकरमते कैयटमते च प्रातिपदिकार्थसूत्रस्यार्थो भवति– प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये वचनमात्रे च प्रथमा भवति। दीक्षितमते प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे वचनमात्रे च प्रथमा भवति। नागेशमतेप्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये वचनमात्रे च प्रथमा भवति। तत्र अलिङ्गेभ्यो नियतलिङ्गेभ्यश्च प्रथमाविधानार्थं प्रातिपदिकार्थमात्रे

---

1. प्रातिपदिकार्थसूत्रव्याख्याने, प्रौढमनोरमा, पृ.– 612
2. प्रातिपदिकार्थसूत्रभाष्ये, म.भा. (द्वितीयोभागः), पृ.– 513

प्रथमा इति वाक्यम्। अनियतलिङ्गेभ्यः प्रथमाविधानार्थं लिङ्गमात्राधिक्ये प्रथमा इति द्वितीयं वाक्यम्, केवललिङ्गस्य प्रातिपदिकार्थं विना कुत्रापि अनुपस्थितेः अधिकस्य ग्रहणम्। एतच्च कैयटदीक्षितकमलाकराणां तुल्यम्। परिमेयार्थसंग्रहाय परिमेयार्थपर-परिमाण- शब्दग्रहणमिति कैयटकमलाकरौ। परिमेयार्थश्च प्रातिपदिकार्थं विना न क्वचिदुपस्थीयत इत्यतः अत्रापि अधिकग्रहणं करणीयम्। ततश्च परिमाणमात्राधिक्ये प्रथमा इति तृतीयं वाक्यमिति फलति। दीक्षितस्तु इष्टशाब्दबोधाय परिमाणग्रहण-मित्यभिप्रैति। किञ्च कैयटमते कमलाकरमते स्वार्थे एव प्रथमा, किन्तु दीक्षितमते परिमाणार्थे प्रथमा। अतः अधिकग्रहणं न करणीयम्। परिमाणमात्रे प्रथमा इति तृतीयं वाक्यं फलति। अतः "प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात्"[1] इति गिरिधरशर्मणा परमेश्वरानन्दशर्मणा सम्पादिताया वैयाकरणसिद्धान्तकौमुद्याः प्रथमखण्डे प्रातिपदिकार्थसूत्रस्थवृत्तिग्रन्थस्य यः पाठः स न युक्तः। तस्य ग्रन्थस्य यद्व्याख्यानं बालमनोरमायां दृश्यते- "लिङ्गमात्राद्याधिक्य इति। लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये चेत्यर्थः"[2] इति तदपि भ्रान्तम्। न हि परिमाणाधिक्ये प्रथमा विधीयते अपि तु परिमाणमात्रे एव। सः अर्थः कैयटमते कमलाकरमते नागेशमते यद्यपि संगच्छते, दीक्षितमते तु नैव संगच्छते। अतः प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे वचनमात्रे च प्रथमा भवति इति सूत्रार्थो दीक्षितमते वक्तव्यः। दृश्यते च युक्तः पाठो बालकृष्णशर्मपञ्चोलिना सम्पादिताया वैयाकरणसिद्धान्तकौमुद्या द्वितीयांशे- "प्रातिपदिकार्थमात्रे लिङ्गमात्राधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात्"[3] इति।

"द्रोणः खारी आढकमित्यत्रापि यथा स्यात्" इति द्रोणः, खारी, आढकम् इत्यत्र द्रोणादीनां मेयवृत्तित्वे अपि यथा प्रथमा स्यात् इति भाष्यवचनस्यार्थः इति कैयटव्याख्यानात्प्रतीयते। अर्थात् परिमाणवाचकशब्दा लक्षणया यदा परिमेयार्थे वर्तन्ते तदा परिमेयरूपलक्ष्यार्थसंग्रहाय परिमाणग्रहणमिति कैयटेन प्रत्यपादि। कमलाकरेण तदेवानुसृतम्। परन्तु तन्न रमणीयम्। तत्र युक्तयः-

1. व्याख्यानेऽस्मिन् भाष्ये परिमाणग्रहणस्य उदाहरणरूपेण द्रोणादिशब्दानामेव उपन्यासात् व्रीह्यादिपदानामनुपादानात् न्यूनता स्फुटा।

2. द्रोणः खारी आढकमित्यत्रापि यथा स्यात् इत्यत्र मेयवृत्तित्वे इति अध्याहार्यं भवति। ततः द्रोणः खारी आढकमित्यत्र मेयवृत्तित्वे अपि यथा स्यात् इति अर्थः कल्पनीयः।

---

1. वै.सि.कौ. (प्रथमोभागः), पृ.- 592-593
2. वै.सि.कौ. [बालमनोरमा] (प्रथमोभागः), पृ.-593
3. वै.सि.कौ. [लक्ष्मीव्याख्यासहिता] (द्वितीयोंऽशः), पृ.-769

3. परिमेयार्थरूपलक्ष्यार्थसंग्रहाय परिमाणग्रहणे कृते सिंहो माणवकः इत्यादौ सदृशार्थस्य आधिक्येन भानात् सिंहादिशब्दात् प्रथमा न स्यादिति सूत्रकारस्य भाष्यकारस्य सिंहो माणवक इत्यादेरज्ञानकल्पना च कर्तव्या इति आपतति।

4. यदि चोच्यते यत् परिमाणग्रहणं लक्ष्यार्थोपलक्षणम्। उपलक्षणमर्थात् स्वबोधकत्वे सति स्वेतरबोधकत्वम् इति परिमाणग्रहणेन समेषां लक्षणस्थलानां संग्रहः स्यादिति चेत् पदे एव लक्षणा इति पक्षे परिमाणग्रहणस्य वैयर्थ्यापत्तिः स्यात्।

अतः कैयटमतं न युक्तमिति आपतितम्। एतेन कमलाकरोऽपि प्रत्युक्तः। अतः कैयटमतमुपेक्ष्य शाब्दबोधवैलक्षण्याय परिमाणग्रहणमिति दीक्षितोऽभिप्रैति। एवं च दीक्षितमते "द्रोणः खारी आढकमित्यत्रापि यथा स्यात्" इति भाष्यस्य द्रोणः खारी आढकमित्यत्र विभक्त्यर्थस्य परिमाणस्य परिच्छेद्यपरिच्छेदकभावेन व्रीह्यादौ मेयेऽन्वयो यथा स्यादिति अर्थः फलति। अतो लक्षणाऽसंग्रहरूपो दोषो नास्ति। यतो हि दीक्षितमते पदे एव लक्षणा, अतः प्रथमवाक्यद्वयेनैव लक्षणास्थले प्रथमा स्यात्। एवं च शाब्दबोधमात्रवैलक्षण्याय परिमाणग्रहणमिति दीक्षितहृदयम्। परन्तु मतमिदं समर्थ्यते चेत् केचन दोषाः समापतन्ति। तथाहि–

1. यत्र भेदसम्बन्धेनान्वयो भवति तत्र समानविभक्त्यन्तत्वं नापेक्षते, यथा– राज्ञः पुरुषमानय इति। तथा द्रोणो व्रीहिरित्यत्र भेदान्वये सति द्रोणो व्रीहिमानय इति प्रयोगापत्तिः स्यात्।

2. यदि चोच्यते यत् तादृशप्रयोगवारणाय अभेदेन प्रकृत्यर्थान्वितः प्रत्ययार्थो यत्र भेदेनापि पदार्थान्तरान्वयी तत्रापि समानविभक्तिकता इति व्युत्पत्तेरङ्गीकारान्न दोषः इति चेत् तादृशवचनकल्पनं गौरवाय भवति।

3. भाष्ये परिमाणग्रहणस्य द्रोणः खारी इत्यादीनि एव उदाहरणानि प्रदत्तानि, न तु द्रोणो व्रीहिरिति। एवं च व्रीह्यादिपदानुपादानात् न्यूनता।

4. तिङ्समानाधिकरणे प्रथमा इति वार्तिकेन सह विरोधः स्यात्। यतोहि वार्तिकस्यास्य प्रातिपदिकार्थसूत्रेणैकवाक्यतया तिङ्समानाधिकरणो यः प्रातिपदिकार्थः तस्मात् प्रथमा इत्यर्थो भवति। तिङ्सामानाधिकरण्यञ्च तिङर्थाभिन्नार्थाभिधायकत्वम्। यथा– देवदत्तः अस्ति इत्यत्र तिङर्थः कर्ता, स एवार्थो देवदत्तशब्दोत्तरप्रथमायाः, अभिन्नार्थाभिधायकत्वेन सामानाधिकरण्यं स्पष्टम्। किन्तु द्रोणो व्रीहिरस्ति इत्यत्र द्रोणपदोत्तरप्रथमायाः परिमाणमर्थः, तिङर्थश्च कर्ता इति सामानाधिकरण्याभावात् तिङ्समानाधिकरणे प्रथमा इति वार्तिकविरोधः स्फुट एव।

5. परिमाणं प्रत्ययार्थः इति गृह्यमाणे प्रातिपदिकार्थश्च लिङ्गं च परिमाणं च वचनं च इति प्रातिपदिकार्थलिङ्गपरिमाणवचनानि इति यो द्वन्द्वसमासः, स नोपपद्येत, सहविवक्षायां द्वन्द्वविधानात्। सहविवक्षा च एकधर्मावच्छिन्नस्यैक–

धर्मावच्छिन्ने एकधर्मावच्छिन्नसंसर्गेणान्वयरूपा। प्रातिपदिकार्थलिङ्गवचनानि प्रातिपदिकार्थत्वधर्मावच्छिन्नानि, परिमाणं च प्रत्ययार्थत्वधर्मावच्छिन्नम् इति एकधर्मावच्छिन्नत्वाभावेन सहविवक्षाया अभावाद् द्वन्द्वाभावः स्यात्।

6. 'परिवृतो रथः' (अष्टा.- 4.2.10) इत्यधिकारपठितस्य 'पाण्डुकम्बलादिनिः' (अष्टा.- 4.2.11) इति सूत्रस्य भाष्ये भाषितं भाष्यकृता- "अयं योगः शक्योऽवक्तुम्। कथम्- पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिन इति। इनि नैतन्मत्वर्थीयेन सिद्धम्। पाण्डुकम्बलोऽस्यास्तीति - पाण्डुकम्बली"[1] इति। मत्वर्थीयेनेनिनैव सिद्धे पुनरिनिविधानं व्यर्थमिति कथनं सूचयति यत् शब्दशास्त्रे केवलशाब्दबोधवैलक्षण्याय न किंचिदुपादीयते। अन्यथा परिवृतार्थे विधाने पाण्डुकम्बलेन परिवृतः इति बोधः, मत्वर्थीये तु पाण्डुकम्बलमस्यास्तीति बोधः इति शाब्दबोधवैलक्षण्यस्य सुस्पष्टत्वाद् भाष्यकारस्य आक्षेपो निरर्थकः स्यात्। अत एव औपगव इत्यादौ 'तस्येदम्' (अष्टा.- 4.3.120) इत्यणि सिद्धे 'तस्यापत्यम्' (अष्टा.-4.1.92) इति सूत्रं किमर्थमिति जिज्ञासायां- "बाधनार्थं कृतं भवेत्"[2] इति समाधानदानं संगच्छते, यतो हि पूर्वसूत्रेण इदन्त्वेन बोधः, अनन्तरेण च अपत्यत्वेन बोधः इति बोधवैलक्षण्यस्य स्फुटत्वात् तादृशप्रश्नोत्तरं व्यर्थं स्यात्।

**8. उपसंहृतिः**

एवं च शाब्दबोधवैलक्षण्याय परिमाणग्रहणमिति स्वीकारे सूत्रकारमते परिमाण-ग्रहणस्य सार्थक्यं कथञ्चिदपि उपपादयितुं न शक्यते। किञ्च द्विकं प्रातिपदिकार्थः इति शास्त्रप्रसिद्धपक्षाश्रयणेनैव सिद्धे नियतोपस्थितिकत्वं प्रातिपदिकार्थः इति नियमांश-निवेशे क्लिष्टकल्पनैव भवति। किञ्च घट इत्यादावपि तत्तद्घटव्यक्तीनां भाने नियमाभावात् कदाचित्काचिद्व्यक्तिः कदाचित्सर्वा व्यक्तयो भासन्ते इति अनुभवसिद्धः। किञ्च अनियतलिङ्गस्थले नियततया लिङ्गं न भासते, प्रथमाविभक्तियोगे एव भासते, तथा सति द्वितीयाद्यन्ते कथं लिङ्गबोधः? अतः प्रवृत्तिनिमित्ततदाश्रययोरेव प्रातिपदिकार्थ- पदेन ग्रहणं युक्तम् इति बोध्यम्। एवं लोकप्रसिद्धं परिमीयतेऽनेनेति परिमाणमेव युक्तिसंगतं सूत्रसम्मतञ्च। ततश्च परिमाणे वर्तमानात्प्रातिपदिकात् स्वार्थे प्रथमा इति तृतीयवाक्यस्य अर्थः। तस्योदाहरणं च- द्रोणः इत्याद्येव। तथा चातिरिक्तव्युत्पत्तिकल्पना, भाष्यविरोधः, वार्तिकविरोधः, द्वन्द्वानुपपत्तिः इति दोषा अपि न सन्तीति सर्वं सुसंगतम्।

**॥ श्रीरामकृष्णार्पणमस्तु॥**

---

1. म.भा. (चतुर्थोभागः), पृष्ठम्-164
2. तस्यापत्यमितिसूत्रभाष्ये, म.भा. (चतुर्थोभागः), पृष्ठम्-117

## सन्दर्भसूची

1. पतञ्जलिः। (1987)। व्याकरणमहाभाष्यम् [प्रदीपोद्द्योतोपेतम्] (प्रथमः खण्डः)। शास्त्री, भार्गवः (सम्पा.)। देहली : चौखम्बासंस्कृतप्रतिष्ठान।

2. पतञ्जलिः। (1988)। व्याकरणमहाभाष्यम् [प्रदीपोद्द्योतोपेतम्] (द्वितीयं खण्डम्)। शास्त्री, भार्गवः (सम्पा.)। देहली : चौखम्बासंस्कृतप्रतिष्ठान।

3. पाणिनिः। (2009)। अष्टाध्यायी [पदच्छेद-वृत्ति-वार्तिक-टिप्पणी-सहिता]। पाण्डेयः, श्रीगोपालदत्तः (सम्पा.)। वाराणसी : चौखम्बा सुरभारती प्रकाशन।

4. भट्टः, कौण्डः। (1996)। वैयाकरणभूषणसारः। शास्त्री, श्रीसदाशिवः (सम्पा.)। वाराणसी : चौखम्बा संस्कृत सीरिज।

5. भट्टः, नागेशः। (2015)। लघुशब्देन्दुशेखरः [शेखरदीपिकाव्याख्योपेतः]। नेने, गोपालशास्त्री (भूमिकालेखकः)। वाराणसी : चौखम्भा प्रकाशन।

6. भट्टोजिदीक्षितः। (1997)। प्रौढमनोरमा (अव्ययीभावान्तः)। शर्मा, सभापतिः (संपा)। वाराणसी : वाणी-विलास-प्रकाशन।

7. भट्टोजिदीक्षितः। (पुनर्मुद्रणम् 2010)। वैयाकरणसिद्धान्तकौमुदी [बालमनोरमा-तत्त्वबोधिनीव्याख्याद्वयोपेता] (प्रथमो भागः)। शर्मा, गिरिधरः; शर्मा, परमेश्वरः (संपा)। वाराणसी : मोतीलाल बनारसीदास।

8. भट्टोजिदीक्षितः। (1966)। वैयाकरणसिद्धान्तकौमुदी [लक्ष्मीव्याख्योपेता] (द्वितीयोंऽशः)। पञ्चोली, बालकृष्णशर्मा (संपा)। वाराणसी : मोतीलाल बनारसीदास।

9. वामनजयादित्यौ। (1985)। काशिका [न्यास-पदमञ्जरी-भावबोधिनीसहिता] (प्रथमो भागः)। त्रिपाठी, जयशङ्करः; मालवीयः, सुधाकरः (संपा)। वाराणसी : तारा बुक एजेन्सी।

10. वामनजयादित्यौ। (1986)। काशिका [न्यास-पदमञ्जरी-भावबोधिनीसहिता] (तृतीयो भागः)। त्रिपाठी, जयशङ्करः; मालवीयः, सुधाकरः (संपा)। वाराणसी : तारा बुक एजेन्सी।

11. वामनजयादित्यौ। (1986)। काशिका [न्यास-पदमञ्जरी-भावबोधिनीसहिता] (द्वितीयो भागः)। त्रिपाठी, जयशङ्करः; मालवीयः, सुधाकरः (संपा)। वाराणसी : तारा बुक एजेन्सी।



 ISSN : 0975-1769

# अधिकरणस्वरूपविमर्शः

डॉ. जयदेवदिण्डा*

## भूमिका

करोति क्रियां निष्पादयतीत्यर्थे 'डुकृञ् करणे' इति तनादिगणीयधातोः 'ण्वुल्तृचौ' [अष्टा.- 3।3।133] इत्यनेन कर्तरि ण्वुल्प्रत्यये अनुबन्धलोपे च, 'वु' इत्यस्य 'युवोरनाकौ' [अष्टा.- 7।1।1] इत्यनेन अकादेशे, 'अचो ञ्णिति' [अष्टा.- 7।2।115] इत्यनेन ऋकारस्य वृद्धौ कारकशब्दो निष्पद्यते। अस्ति च संस्कृतव्याकरणे कारकस्यातीव प्राधान्यम्। अतः व्याकरणशास्त्रप्रतिपादकानां ग्रन्थतल्लजेषु विषयस्यास्य अन्यूनप्राधान्यं दृश्यते। पाणिनिः अष्टाध्याय्यामादौ कारकसंज्ञाः विधत्ते। ततो विभक्तीः अभिधत्ते। क्रमवतां वर्णानां समूहः पदम्। पदसमूहो वाक्यम्। वाक्यमभीप्सितमर्थं बोधयति। परन्तु पदमन्तरा वाक्यं न सम्भवति। वर्णेभ्यो विना पदमपि न। अतो व्याकरणे वर्णनिमित्तानि पदनिमित्तानि कार्याणि च सन्ति। प्रायः सन्धिकार्याणि वर्णनिमित्तकानि। समासादीनि पदनिमित्तकानि। वाक्यमवलम्ब्य प्रवृत्तानि भवन्ति कारकाणि कारकसम्बन्धीनि कार्याणि च। प्रबन्धेऽस्मिन् कारकस्वरूपं प्रतिपाद्य अधिकरणभेदविचारपुरस्सरम् अधिकरणस्वरूपं विमृश्यते।

## 1. कारकार्थविचारः

आदौ तावत् जिज्ञासा उत्पद्यते यत् कारकस्य अभिधा का? कारकस्याभिधाविषये सन्ति वैयाकरणानां बह्व्यः विप्रतिपत्तयः। यद्यपि वैयाकरणमार्गनिर्देशकेन महर्षिपाणिनिना कारकार्थविषये न किञ्चित् साक्षादुक्तं तथापि तेन विहितेन 'कारके' [अष्टा.- 1।4।23] इति अधिकारसूत्रेण उत्तरोत्तरं विधीयमानानाम् अपादानादीनां समेषां कारकसंज्ञा प्रोक्ता।

कलापव्याकरणे "क्रियानिमित्तं कारकं लोकतः सिद्धम्" इति दुर्गसिंहः प्रावोचत्। अस्य टीकायां पञ्जीकारः- "कारकशब्दोऽयमव्युत्पन्नो निमित्तपर्यायः स्वभावान्नपुंसकलिङ्गः। यत् क्रियानिमित्तमात्रं प्रधानमप्रधानं वा तत्कारकमुच्यते"[1]

---

* सहायकाध्यापकः, व्याकरणविभागः, लक्ष्मीदेवीशराफआदर्शसंस्कृतमहाविद्यालयः, हरिःशरणं कुटीरः, कालीराखा, देवघरः, झारखण्डः - 814112।

1. *व्याकरण दर्शनेर इतिहास*, गुरुपदहालदारः, पृ० 254।

इति। लक्षणेऽस्मिन् अतिव्याप्तिरव्याप्तिश्च दोषद्वयमापतति इति लक्षणमिदं त्यक्तव्यम्। 'चैत्रस्य तण्डुलं पचति' इत्यादौ चैत्रस्य पचनक्रियायां निमित्तत्वेन सम्बन्धस्यापि कारकत्वापत्तिः। अव्याप्तिः यथा निमित्तस्य कार्यात्पूर्ववर्तित्वं तत्कारणत्वे आवश्यकत्वात्, 'घटं करोति' इत्यादौ घटस्य निर्वर्त्यकर्मत्वात्, क्रिययैव घटस्य निर्माणसम्भवात् पूर्ववर्तित्वम् असम्भवमिति।

"कारकशब्दः निमित्तपर्यायः। कारकं हेतुरित्यर्थान्तरम्। कस्य हेतुः? क्रियायाः। वक्ष्यति– 'ध्रुवमपायेऽपादानम्' (1।4।24), ग्रामादागच्छति। पर्वातादवरोहति"[1] इति *काशिकायां* वामनजयादित्यौ। तस्मात् 'माणवकस्य पितरं पन्थानं पृच्छति' इत्यत्र माणवकस्य न कारकत्वम्। अत्र पितुः सम्बन्धित्वेन माणवको विवक्षितः, न तु प्रश्नक्रियां प्रति निमितत्वेनेति कर्मसंज्ञा न भवति। एतन्मतञ्च अतिव्याप्तिदोषदुष्टम्। कारकस्य क्रियाप्रेरकनिमित्तत्वे हि 'चैत्रस्य तण्डुलं पचति' इत्यादौ सम्बन्धिनि चैत्रादावतिव्याप्तेः। यथा हि सम्प्रदाने दानानुमतिप्रकाशनद्वारा दातरि सम्प्रदानं भवति तथैव तण्डुलादिसम्पादनद्वारा सम्बन्धिनोऽपि पाकादिक्रियानिमित्तत्वात्। षष्ठ्यर्थो हि नामार्थेनान्वेति न तु क्रियया। तत्र क्रियान्वयाभावान्न षष्ठ्यर्थस्य उपपदविभक्तेश्च कारकत्वं सिध्यति।

"वक्ष्यमाणापादानत्वाद्यन्यतमम् अपादानाद्यन्यतमत्वं सङ्केतविशेषसम्बन्धेन कारकशब्दो वा कारकत्वम्" इति *कारकतत्त्वग्रन्थे* शेषचक्रपाणिः। परन्तु लक्षणमिदं दोषयुक्तम्। अपादानादिषु कदाचित् षष्ठ्यार्थाः भवन्ति यत्र कारकत्वं लक्षितुं न शक्यते। अपादानत्वादयः ध्रुवत्वासोढत्वेप्सितत्वेत्यादयः नैकरूपाः। कस्याप्येकस्यैव कारकत्वं न सम्भवति। पुनश्च कारकज्ञानाभावे अपादानादीनां ज्ञानमपि कठिनम्।

### 1.1. दीक्षितमते कारकस्वरूपम्

"क्रियान्वयित्वं कारकत्वम्" इति भट्टोजिदीक्षितः। अन्वयश्च विभक्त्यर्थ–मभ्यन्तरीकृत्य बोध्यः। क्रियान्वयित्वस्य कारकत्वस्वीकारादेव 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ ब्राह्मणस्य न कारकत्वम्। क्रियाजनकत्वस्वीकारे तु ब्राह्मणस्यापि क्रियाजनकत्वात् कर्मत्वापत्तिः। किञ्च क्रियाजनकत्वस्य कारकत्वस्वीकारे अव्याप्तिः अतिव्याप्तिदोषश्च। 'सतो वस्तु जायते' इति सत्कार्यवादे सूक्ष्मरूपेण घटादीनां पूर्वं सत्त्वात् दोषाभावेऽपि असत्कार्यवादे 'घटो जायते', 'घटं करोति' इत्यादौ उत्पत्तेः प्राक् घटादीनाम् असत्त्वात् क्रियाजनकत्वाभावात् कर्तृकर्मणोरव्याप्तिः। किञ्च जनिष्यमाणपुत्राय गां दास्यामीत्यादौ असन्निहितसम्प्रदानस्य जायमानत्वेन तस्य क्रियानियतपूर्ववृत्तित्वाभावात् कारकत्वं न स्यात् इति अतिव्याप्तिः। तस्मात् क्रियाजनकत्वं

---

1. *काशिका*, द्वितीयो भागः, कारके, पृ० 130।

न कारकत्वमपि तु क्रियान्वयित्वमेवेति दीक्षितानामाशयः। उक्तञ्च मनोरमायाम्– "अन्वर्था चेयं संज्ञा करोतीति कारकमिति, तेन क्रियानन्वयिनो न भवति, ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति। इह हि ब्राह्मणः पुत्रविशेषणं, न तु क्रियान्वयी। यद्वा कारकशब्दः क्रियापरः, करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्तेः। तथा च अपादानादिसंज्ञाविधौ क्रियायामित्यस्योपस्थित्या क्रियान्वयिनामेव तत्तत्संज्ञा विधीयन्ते। अस्मिन् पक्षे वृत्तावपि कारकमित्यस्य क्रियान्वयीत्यर्थः"[1] इति। *भूषणसारे* अयमेव पक्षः सिद्धान्तितः। उक्तञ्च कौण्डभट्टेन भूषणसारे– "कारकशब्दो हि क्रियापरः– 'करोति कर्तृकर्मादिव्यपदेशा'निति व्युत्पत्तेः, तथा चाग्रिमेष्वपादानदिसंज्ञाविधिषु क्रियार्थकारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्पष्टम्"[2] इति।

## 1.2. नागेशमते कारकार्थविचारः

नागेशमते तु "क्रियान्वयित्वं कारकत्वम्" इति दीक्षितमतं न साधु। एतत्स्वीकारे 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ ब्राह्मणस्यापि कारकत्वापत्तिः, तस्य क्रियान्वयित्वात्। किञ्च 'क्रियान्वयित्वं कारकत्वम्' इत्युक्तौ कारकाणां भावनान्वयः इत्यस्य क्रियान्वयिनां क्रियान्वय इत्यर्थापत्त्या असङ्गत्यापत्तिः। किञ्च अधिकरणस्य कारकत्वेन क्रियान्वय इति दीक्षितकृतशब्दप्रयोगासङ्गत्यापत्तिश्च।

तन्मते तु "क्रियाजनकत्वं कारकत्वम्"[3] इति। लक्षणमिदं 'कारके' [अष्टा. – 1।4।23] इति सूत्रभाष्याल्लब्धार्थकानुवादपरम्। तथा हि तत्र– "कारक इति संज्ञानिर्देशश्चेत् संज्ञिनोऽपि निर्देशः कर्तव्यः। साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यम्। इतरथा हि कर्मसंज्ञाप्रसङ्गश्चाकथितस्य ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीति। नैष दोषः। कारक इति महती संज्ञा क्रियते। संज्ञा च नाम यतो न लघीयः। कुतः एतत्? लघ्वर्थं हि संज्ञाकरणम्। तत्र महत्याः संज्ञायाः करणे एतत्प्रयोजनम्– अन्वर्थसंज्ञा यथा विज्ञायेत– करोतीति कारकम्"[4] इत्युक्तम्। करोति क्रियां निर्वर्तयति निष्पादयतीत्यर्थः। अत एव एतत्सूत्रभाष्ये साधकं निर्वर्तकं कारकसंज्ञं भवतीति वक्तव्यमित्युक्तम्। एवञ्च कारकशब्देन क्रियाजनकत्वरूपार्थो लभ्यते।

यद्वा कारकशब्दश्चात्र क्रियापरः। कारकशब्दाल्लोके क्रियाप्रतीतेरदर्शनेऽपि सूत्रे कारकशब्देन क्रियोच्यते। करोति कर्तृकर्मादिव्यपदेशानिति व्युत्पत्त्या हि क्रियायाः कारकत्वम्। कारके क्रियायां विषये इत्यर्थः। तथा हि *भाष्यम्*– "अथ वा यावद्

---

1. *प्रौढमनोरमा*, कर्तुरीप्सिततमं कर्म, पृ० 46-48।
2. *वैयाकरणभूषणसारः*, धात्वर्थप्रकरणम्, कारिका० 16, पृ० 131।
3. *लघुशब्देन्दुशेखरः*, कारके, पृ० 683।
4. *महाभाष्यम्*, द्वितीयं खण्डम्, कारके, पृ० 240-242।

ब्रूयात्– 'क्रियायाम्' इति, तावत्– 'कारके' इति। एवञ्च कृत्वा निर्देश उपपन्नो भवति 'कारके' इति। इतरथा हि 'कारकेषु' इति ब्रूयात्"[1] इत्युक्तम्। एवं पक्षद्वयेऽपि कारकशब्देन क्रियाजनकत्वरूपार्थो लभ्यते। उक्तञ्च भर्तृहरिणा–

**स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे।**
**क्रियाणामभिनिष्पत्तौ सामर्थ्यं साधनं विदुः॥** इति।

[वाक्यपदीयम्, 3।7।1]

स्वाश्रये साधनाश्रये, समवेतानां क्रियाणाम्, तद्वदेवाश्रयान्तरे समवेतानां क्रियाणामभिनिष्पत्तौ सिद्धौ यत्सामर्थ्यं तत् साधनं शक्तिं कारकं विदुः भाष्यकारादयः इति।

क्रियाजनकस्य कारकत्वे सर्वेषामपि कारकाणां क्रियायामेव अन्वयः। केषाञ्चित् कारकाणां क्रियायां साक्षादन्वयः। अधिकरणस्य तु कर्तृकर्मद्वारा परम्परया क्रियान्वयः। कारकाणि हि स्वस्वव्यापारेण अवान्तरक्रियाद्वारेण वा केनापि रूपेण प्रधानक्रियोत्पत्तौ सहायकानि भवन्ति। अतः सर्वेषामेव कारकाणां प्रधानक्रियायामन्वयः।

ननु क्रियाजनकत्वस्य कारकत्वे 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छति' इत्यादौ पुत्रस्य साक्षात् क्रियाजनकत्वं तद्द्वारा तद्विशेषणस्य ब्राह्मणस्यापि क्रियाजनकत्वात् कारकत्वापत्तिः। 'क्रियान्वयित्वं कारकत्वम्' इति दीक्षितादिमते तु ब्राह्मणस्य पुत्रविशेषणत्वमेव न तस्य क्रियान्वयित्वमिति न दोषः। अत्रोच्यते पुत्रेण ब्राह्मणस्य कुलालजनकस्येव अन्यथासिद्ध्या न क्रियाजनकत्वमिति न तस्य कारकत्वम्। यस्य उपस्थित्यभावेऽपि क्रिया सम्पन्ना भवति अन्यथासिद्धम्। अत्र ब्राह्मणं विनापि पुत्रेण पृच्छाक्रिया सम्पन्ना भवति। तस्य कारकत्वे तु पुत्ररूपकर्मयुक्तत्वात् अकथितञ्चेति कर्मत्वापत्तिः। ब्राह्मणस्य उक्तकारकत्वाभावादेव न क्रियान्वयः। पुत्रस्य तु पृच्छिपदार्थ–घटकज्ञानजनकत्वेन कारकत्वमस्त्येव।

किञ्च असत्कार्यवादे 'घटं करोति' इत्यत्र बुद्धिस्थत्वरूपव्यापारो वर्तते इति बौद्धार्थवादिनः वैयाकरणाः। सर्वोऽपि पदार्थः बौद्धः एव। अतः बौद्धघटस्य अनुत्पादनीयतया नियतपूर्ववर्त्तित्वमस्त्येव। तेन घटे ज्ञानजनकत्वं निश्चीयते। अथवा 'घटं करोति' इत्यत्र मृदादिजनकत्वस्य, 'घटं स्मरति' इत्यत्र सम्बन्धिज्ञाननिष्ठजनकत्वस्य च घटे आरोपः कर्तव्यः। तेन नास्ति अव्याप्तिः। किञ्च असन्निहितसम्प्रदानस्थलेऽपि दातृबुद्धौ विद्यमानत्वात् स्वज्ञानपूर्वकालित्वेन क्रियायाः जनकत्वं सिद्ध्यति। अथवा सम्प्रदानज्ञानवर्तिन्याः दानजनकतया सम्प्रदाने आरोपो विधेयः। तेन नास्ति अतिव्याप्तिः।

1. *महाभाष्यम्*, द्वितीयं खण्डम्, कारके, पृ० 246।

## 2. अधिकरणकारकम्

'सप्तम्यधिकरणे च' [अष्टा.- 2।3।36] इति सूत्रेण अधिकरणे सप्तमी विधीयते। पाणिनिना 'आधारोऽधिकरणम्' [अष्टा.- 1।4।45] इत्यनेन सूत्रेण अधिकरणसंज्ञा व्यधायि। आध्रियतेऽस्मिन्नित्यर्थे आङ्पूर्वकधृधातोः अधिकरणे घञ् 'अध्यायन्यायोद्यावसंहाराधारावयाश्च' [अष्टा.- 3।3।122] इति सूत्रे अवहाराधारा-वायानाम् उपसंख्यानात्। आधारः आश्रयः। एतच्च 'कारके' [अष्टा.- 1।4।23] इति अधिकारसूत्रान्तर्गतम्। एवञ्च कारके क्रियाजनके एतस्य प्रवृत्त्या उपस्थितत्वादधारः क्रियायाः एव ग्राह्यः। किन्निष्ठाधेयतानिरूपिताधारतावान् इति नियमेन आकांक्षोदयात् साक्षात् क्रियाधारत्वं न सम्भवतीति कर्तृकर्मान्यतरवृत्तिक्रियाधारत्वं लभ्यते। साक्षात् फलाश्रयस्य नाधिकरणसंज्ञा परया कर्मसंज्ञया बाधात्। नापि साक्षात् व्यापाराश्रयस्य अधिकरणसंज्ञा परया कर्तृसंज्ञया बाधात्। एवञ्च अन्यकारकवत् साक्षात् क्रियाश्रयत्वं नाधिकरणस्य। किन्तु स्वाश्रायाश्रयत्व-स्वनिष्ठसमवेतत्व-एतदन्यतरसम्बन्धेन। 'कटे आस्ते चैत्रः' इत्यत्र स्वं कटः, तदाश्रयः चैत्रः, तद्वृत्तिः स्थितिक्रिया। 'स्थाल्यां पचति तण्डुलान्' इत्यत्र स्वं स्थाली तन्निष्ठाः तण्डुलाः तद्वृत्तिः विक्लित्तिः। क्रिया कटे तण्डुलेषु च केन सम्बन्धेनेति चेदुच्यते स्वाश्रयाश्रयत्वसम्बन्धेन। स्वं क्रिया तदाश्रयः चैत्रः तदाश्रयः कटः। एवं स्वं विक्लित्तिरूपा क्रिया तदाश्रयाः तण्डुलाः तदाश्रयत्वं स्थाल्यामस्ति। तथा चेत्थं फलति क्रियाधाराधारयोः अधिकरणसंज्ञा भवति। तदेवोक्तं भट्टोजिदीक्षितेन सूत्रस्यास्य वृत्तौ- **"क्रियाकर्मद्वारा तन्निष्ठाक्रियाया आधारः कारकमधिकरणसंज्ञः स्याद्"** इति। कर्तरि विद्यमानव्यापारस्य कर्मणि विद्यमान-फलस्य वा आधारः अधिकरणसंज्ञको भवतीति फलितार्थः। उक्तञ्च *वाक्यपदीये*-

**कर्तृकर्मव्यवहितामसाक्षात् धारयत् क्रियाम्।**
**उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥**

[वाक्यपदीयम्, 3।7।148]

अस्यार्थः- कर्तृकर्मद्वारिकां क्रियां क्रियते ययेति करणव्युत्पत्त्या व्यापाररूपां, क्रियते या इति कर्मव्युत्पत्त्या फलरूपां वा असाक्षाद् धारयत् सत् फलसिद्धिरूपायां क्रियासिद्धौ उपकुर्वत् कारकं शास्त्रेऽधिकरणं स्मृतमिति। अधिकरणकारकस्य क्रियासिद्धौ उपकारश्च कर्तृकर्मधारणमेवेति।

कैय्यटदीक्षितादिप्राचीनमते अधिकरणकारकस्य परम्परासम्बन्धेन साक्षात् क्रियायामन्वयः। नागेशमते अधिकरणस्य साक्षात् कर्तृकर्मणोरेवान्वयः, तद्द्वारा क्रियायामन्वयः न तु साक्षात् क्रियायामिति विशेषः। तथा च प्राचीनमते 'अक्षेषु शौण्डः' इत्यत्र अक्षपदार्थस्य शौण्डे अन्वयाभावात् समासो न स्यादिति शौण्डपदस्य आसक्तशौण्डे लक्षणां कृत्वा आसक्तिक्रियारूपे लक्ष्यार्थे शौण्डपदार्थैकदेशे साक्षाद्

अन्वयमादाय समास उपपाद्यः। नागेशमते तु अक्षस्य शौण्डरूपे कर्तरि अन्वयः, शौण्डस्य च अस्त्यादिक्रियायामन्वयः इति न दोषः।

ननु कालस्य साक्षात् क्रियाधारत्वेन अधिकरणसंज्ञा न स्यात् तथा च 'समये चैत्रस्तण्डुलान् पचति' इति न स्यादिति चेन्न, सूत्रे स्वरितत्वप्रतिज्ञया कालस्यापि परम्परया क्रियाश्रयत्वात्। साक्षात् क्रियाधारत्वविवक्षायान्तु 'कालः पचति' इति कालस्य कर्तृसंज्ञा।

अधिक्रियतेऽस्मिन् अधिकरणमिति महासंज्ञया आधारलाभे आधारपदम् आधारतमार्थमिति सर्वावयवव्याप्त्या हि यो मुख्याधारो न तु गौणाधारस्यापि इति चेदुच्यते 'साधकतमं करणम्' [अष्टा.- 1।4।42] इत्यत्र तमब्ग्रहणेन ज्ञायते कारकाधिकारेऽस्मिन् 'शब्दसामर्थ्यगम्योऽर्थप्रकर्षो नाश्रीयते' इति। तेन गौणमुख्यसाधारण-सर्वाधारस्य आधारपदेन ग्रहणं भवति। तेन 'तिलेषु तैलम्' इति मुख्याधारवत् 'गङ्गायां घोषः' इत्यादिषु गौणाधारादीनां गङ्गादीनामपि अधिकरणसंज्ञा।

### 3. उदाहरणम्

कर्तृनिष्ठक्रियाधारस्य उदाहरणं बालः कटे उपविशति इति। उप-उपसर्ग-पूर्वकविशधातोरर्थः यत्किञ्चिद्देशसंयोगरूपं फलं तदनुकूलक्रिया च। उपवेशन-क्रियाश्रयत्वात् बालः कर्ता। बाले विद्यमानक्रियाधारः कटः। अतः कटः अधिकरणम्। अत्र उपवेशनक्रिया बाले अस्ति। अतः साक्षात् क्रियायाः आधारः बालः एव। बालद्वारा क्रियायाः आधारः कटः। कर्मनिष्ठक्रियाधारस्य उदाहरणं सूदः ओदनं स्थाल्यां पचति इति। पचधातोः अर्थः विक्लित्तिरूपफलं तदनुकूलक्रिया च। पाकक्रियाश्रयत्वात् सूदः कर्ता। विक्लित्तिरूपफलाश्रयत्वात् ओदनः कर्म। कर्मभूते ओदने विद्यमानविक्लित्तिरूपफलाधारः स्थाली। अतः स्थाली अधिकरणम्। अत्र साक्षात्फलस्य आधारः ओदनम्। ओदनद्वारा फलस्य आधारः स्थाली। सर्वत्र परम्परया क्रियायाः फलस्य वा आधारः एव अधिकरणं भवति इति ज्ञेयम्।

### 4. अधिकरणभेदः

अधिकरणं त्रिप्रकारकम् अभिव्यापकमौपश्लेषिकं वैषयिकञ्चेति। सकलावयव-व्याप्तिकृतमधिकरणम् अभिव्यापकाधिकरणमित्यर्थः। इदमेव मुख्यमधिकरणमेतदपेक्षया इतरयोर्गौणत्वमेव। वर्गीकरणस्याधारः 'संहितायाम्' [अष्टा.- 7।1।72] 'साधकतमं करणम्' [अष्टा.- 1।4।42] एतत्सूत्रद्वयभाष्यमेव। औपश्लेषिकं नाम उपश्लेषः संयोगादिसम्बन्धः तत्कृतमधिकरणमौपश्लेषिकमित्यर्थः। विषयतासम्बन्धकृतमधिकरणं वैषयिकम् इत्यर्थः।

ननु अधिकरणस्य त्रैविध्ये गौणमुख्यविचारप्रसङ्गः कुतः इति चेदुच्यते- 'स्वरितेनाधिकारः' [अष्टा.- 1।3।11] इति सूत्रभाष्ये- "अधिकरणमाचार्यः किं न्यायं मन्यते? यत्र कृत्स्न आधारात्मा व्याप्यो भवति। तेनैवेह स्यात्- तिलेषु तैलम्, दध्नि सर्पिरिति। गङ्गायां गावः, कूपे गर्गकूलमित्यत्र न स्यात्। स्वरितेनाधिकं कार्यं भवतीत्यत्रापि सिद्धं भवति अधिकं कार्यम्"[1] इति। एवमेव 'साधकतमं करणम्' [अष्टा.- 1।4।42] इति सूत्रे भाष्येऽपि- "तथाधारमाचार्यः किं न्याय्यं मन्यते। यत्र कृत्स्न आधारात्मा व्याप्तो भवति। तेनेहैव स्यात्- तिलेषु तैलं, दध्नि सर्पिरिति। गङ्गायां गावः, कूपे गर्गकुलमित्यत्र न स्यात्। कारकसञ्ज्ञायां तरतमयोगो न भवतीत्यत्रापि सिद्धं भवति"[2] इति। एवञ्च एतत्सूत्रभाष्येणेदं सुस्पष्टं भवति यत् त्रयाणां सप्तमीशक्यत्वेऽपि अभिव्यापकाधारस्यैव मुख्यत्वमिति।

## 4.1. अभिव्यापकाधिकरणम्

सर्वावयवावच्छेदेनाधेयसम्बन्धाश्रयेण अधिकरणम् अधिव्यापकाधिकरणम्। परिष्कृतमभिव्यापकत्वम्- अवच्छेदकत्वसम्बन्धावच्छिन्ना आधेयत्वनिष्ठा या व्याप्तता तन्निरूपितसमवायसम्बन्धावच्छिन्ना या व्यापकता, तच्छालित्वमभिव्यापकत्वम्। अवच्छेदकता च यावदवयवनिष्ठा ग्राह्या। यथा 'तिलेषु तैलम्' इत्यत्र यावदवयवावच्छेदेन तिले आधारे तैलस्य आधेयस्य सत्त्वात्। तैलनिष्ठा आधेयता अवच्छेदकतासम्बन्धेन यावदवयवेषु तत्रैव समवायसम्बन्धेन तिलस्यापि सत्ता, अवयवावयविनोः समवायनियमात्। तिलः समवायसम्बन्धावच्छिन्नव्यापकताशालीत्यभिव्यापकत्वं तस्मिन्निति लक्षणसमन्वयः।

## 4.2. औपश्लेषिकाधिकरणम्

उपगतः श्लेषः उपश्लेषः। संयोग इत्यर्थः। अत्र उपेत्यविवक्षितम्। अथवा उप समीपे श्लेषः सम्बन्धः उपश्लेषः। उपश्लेषादागतः औपश्लेषिकः। तत आगत इत्यर्थे अध्यात्मादित्वात् ठञ्प्रत्ययः। तत्र औपश्लेषिकं कर्तृद्वारकमधिकरणं यथा 'कटे शेते' इति। अत्र कर्तृगतां शयनक्रियां प्रति कटस्य संयोगसम्बन्धं पुरस्कृत्य देवदत्तद्वारा तदाधारत्वात् अधिकरणत्वम्। कर्मद्वारकम् औपश्लेषिकमधिकरणं यथा 'स्थाल्यां पचति' इति। अत्र कर्मगतां पाकक्रियां प्रति स्थाल्याः संयोगसम्बन्धं पुरस्कृत्य तण्डुलद्वारा अधिकरणत्वम्। 'उपश्लेषः संयोगः' इति पक्षमाश्रित्य औपश्लेषिकस्य उदाहरणं प्रदत्तं सिद्धान्तकौमुद्यां भट्टोजिदीक्षितेन। आधाराधेययोः संयोगसम्बन्धः।

---

1. *महाभाष्यम्*, द्वितीयं खण्डम्, स्वरितेनाधिकारः, पृ० 147।
2. *तत्रैव*, साधकतमं करणम्, पृ० 259।

उपश्लेषः = संयोग इति पक्षेऽस्मिन् 'वटे गावः शेरते', 'गुरौ वसति' इति संयोगाभावात् अधिकरणसंज्ञा न स्यात् इति चेन्न, गोसंयुक्तदेशसंयोगस्य संयोगरूपतया तस्य च वटादौ सत्त्वेन दोषाभावः। समीपे श्लेष इति पक्षेऽपि सामीप्यस्य संयुक्तसंयोगरूपतया तदवच्छेदेन संयोगसत्त्वात् गुर्वादावधिकरणत्वोपपत्तिः। 'इको यणचि' इत्यादावपि इङ्निरूपितकालिकसामीप्यावच्छेदेन संयोगस्य सत्त्वाद् औपश्लेषिकाधिकरणत्वम्। 'गुणसमुदायो द्रव्यम्' इति शब्दस्य गुणत्वपक्षे तु श्लेषपदेन सम्बन्धमात्रग्रहणात् स्वाव्यवहितोत्तरत्वसम्बन्धेन औपश्लेषिकाधिकरणत्वं बोध्यम्। स्वम् = इक्।

नागेशमते तु उप समीपे श्लेषः सम्बन्धः, तत्कृतमौपश्लेषिकमिति व्युत्पत्त्या सामीपिकमेव आधारत्वमौपश्लेषिकम्। एतन्मते तु 'कटे आस्ते' इत्यौपश्लेषिकस्योदाहरणं न युक्तम्। यतः 'संहितायाम्' [अष्टा.- 8।1।72] इति सूत्रे 'तत्र च दीयते कार्यं भववत्' [अष्टा.- 5।1।96] इति सूत्रभाष्ये समीपत्वार्थः स्वीकृतः। परन्तु 'कटे शेते' इत्यत्र सामीप्याभावात् औपश्लेषिकाधारस्य उदाहरणं भवितुं नार्हति। अत एव 'इको यणचि' [अष्टा.- 6।1।77] इति सूत्रे अचि पदे औपश्लेषिकाधारस्य सप्तमीविधानं सङ्गच्छते। तत्र अजादिसामीप्यमेवेगादीनाम्। अत्र मूलन्तु 'संहितायाम्' [अष्टा.- 6।1।72] इति सूत्रभाष्यम्। तत्र हि- "अयं योगः शक्योऽवक्तुम्। कथम्? अधिकरणं नाम त्रिप्रकारकम्- अभिव्यापकम्, औपश्लेषिकम्, वैषयिकमिति। शब्दस्य च शब्देन कोऽन्योऽभिसम्बन्धो भवितुमर्हत्यन्यदत उपश्लेषात्। 'इको यणचि' [अष्टा.- 6।1।77] अचि उपश्लिष्टस्य"[1] इति। अच्युपश्लिष्टस्य अच्समीपोच्चारितस्येत्यर्थ इति कैयटः। एवमेव 'तदस्मिन्नधिकमिति दशान्ताड्डः' [अष्टा.- 5।2।45] इति सूत्रभाष्येऽपि- "स तर्हि पञ्चमीनिर्देशः कर्तव्यः। न कर्तव्यः। यद्यपि तावद्वैषयिके व्यापके वाधिकरणत्वे सम्भवो नास्ति, औपश्लेषिकमधिकरणं विज्ञास्यते- एकादश कार्षापण उपश्लिष्टा अस्मिञ्छते- एकादशं शतम्"[2] इति। समीपवृत्तिक्रियाधार औपश्लेषिक इति स्वीकारादेव 'यन्मासे अतिक्रान्ते दीयते' इत्यत्र मासस्य अधिकरणसंज्ञा सिध्यति। यत्तु 'कटे आस्ते' इत्यौपश्लेषिकोदाहरणमुक्तं कैयटेन तदयुक्तमुक्तभाष्यविरोधात्।

यद्वा इत्युक्त्वा समाधानमपि प्रदत्तं नागेशेन। एकदेशावच्छेदेन श्लेषेऽप्यौपश्लेषिकम्। तत्र श्लेषस्य समीपमुपश्लेषम् = आरोपितश्लेषः। तत आगतमौपश्लेषिकम् एकदेशावच्छेदेन सम्बन्धस्यावयविनि आरोपः स्यात्। अर्थात् एकदेशे क्रियायाः सम्बन्धेऽपि क्रियायाः समीपवृत्तिता स्वीकृता। अतः 'कटे आस्ते' इति वाक्ये कटपदे औपश्लेषिकाधारे सप्तमी विहिता। अत्र अवयववृत्तिसंयोगस्य अवयविनि

---

1. *तत्रैव*, पञ्चमं खण्डम्, संहितायाम्, पृ० 74।
2. *तत्रैव*, चतुर्थं खण्डम्, तदस्मिन्नधिकमिति दशान्ताड्डः, पृ० 324।

कटे आरोपः। तत्कृतं कटात्मकमौपश्लेषिकाधिकरणम्। कटस्यैकदेशः मुख्याधारः। अवशिष्टः कटः गौणाधारः। एतत्सर्वं गौणमधिकरणम्। अतः औपश्लेषिकाधारः गौणाधारः इति कथ्यते। एवमेव गङ्गैकदेशे तरन्तीषु गोषु कूपैकदेशे स्थिते गर्गकुले गङ्गायां गावः, कूपे गर्गकुलमित्यादौ बोध्यम्। उक्तञ्च नागेशेन लघुशब्देन्दुशेखरे– "कटे आस्ते इति तु नौपश्लेषिकोदाहरणं युक्तमुक्तभाष्यविरोधात्। यद्वा एकदेशावच्छेदेन श्लेषेऽपि श्लेषस्थसमीपमुपश्लेषं तत्कृतमिति व्युत्पत्त्यौपश्लेषिकत्वमित्यभिप्रायेण तदुदाहरणम्। तदेतत्सर्वं गौणमधिकरणम्, 'गङ्गायां गावः' इत्यादिकञ्चेति"[1] इति। अभिव्यापकातिरिक्तं गौणमधिकरणमिति बोध्यम्।

## 4.3. वैषयिकाधिकरणम्

विषयात्= विषयत्वसम्बन्धादागतं वैषयिकम्। औपश्लेषिकाभिव्यापकभिन्नम् अधिकरणमात्रं वैषयिकपदेन गृह्यते। अत एव तत्र तत्र घटकत्वं सप्तम्यर्थ इति उपपद्यते। वैषयिकस्य अधिकरणस्य उदाहरणं भवति मोक्षे इच्छा अस्ति इति। अत्र अधिकरणस्य मौक्षस्य आधेयस्य इच्छायाश्च विषयतासम्बन्धः। इच्छायां विषयो मोक्षः तस्मात् इच्छा विषयतासम्बन्धेन मोक्षे वर्तते इति प्रक्रियानुरोधेन विषयतासम्बन्धकृतमधिकरणं हि मोक्षः। कर्तृभूतेच्छागतां सत्ताक्रियां प्रति मोक्षस्य विषयतासम्बन्धपुरस्कारेण इच्छाधारत्वात् अधिकरणत्वमिति सारः। अयं भावः ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्। ज्ञानात् इच्छति ततो यतते तदुत्तरं फलावाप्तिरिति क्रमः। चतुर्विधपुरुषार्थेषु मोक्षस्य परमपुरुषार्थत्वमभिहितं शिष्टैः। तत्र निर्विषयिका इच्छा न भवति। सर्वा इच्छा सविषया एव। एवञ्चात्र इच्छायां मोक्षो विषयतया भासते। तस्मात् तद्वाचकात् सप्तमी उपपद्यते च।

## 5. समीक्षणम्

*शब्दार्थरत्ने* सामीप्याश्लेषविषयेव्याप्त्याधाराश्चतुर्विधः इति अधिकरणभेदः प्रदर्शितः। तत्र सामीप्यसम्बन्धेन अधिकरणमाद्यम्। यथा 'वने नदी आस्ते' इत्यादौ वनादि। एकदेशसम्बन्धेन द्वितीयम्। यथा 'कटे आस्ते' इत्यादौ कटादि। विषयतासम्बन्धेन तृतीयम्। यथा 'मोक्षे इच्छास्ति' इत्यादौ मोक्षादि। व्याप्तिसम्बन्धेन चतुर्थम्। यथा 'तिलेषु तैलमस्ति' इत्यादौ तिलादि।

'कटे आस्ते देवदत्तः' इत्यत्र संयोगिनः कटस्य तिलदध्यादिवत् सकलावयवव्याप्त्या देवदत्तश्लेषो न दृश्यते, अपि तु कतिपयावयवव्याप्त्या इत्यविशेषान् अभिव्यापकत्वरूपविशेषराहित्याद् औपश्लेषिक इति सामान्यसंज्ञया उपश्लेषरूपाधिकरणत्रयसाधारणधर्मप्रयुक्तया संज्ञया अयमाधार उच्यते। तिलेषु तैलम् इति तु

1. *लघुशब्देन्दुशेखरः*, सप्तम्यधिकरणे च, पृ० 350।

तिलरूपाधारसमवायिना तैलरसेन तिलानां समस्तावयवव्याप्त्या लोके प्रसिद्ध्या सम्बन्धाद् व्यापकमेतदधिकरणम्। 'खे शकुनयः' इत्यत्र त्वाकाशस्य वस्तुतोऽवयवाभावात् प्रदेशकल्पनया सम्बन्धकल्पनाद् वैषयिकमेतदधिकरणम्। एवं 'कटे आस्ते' इतिवत् 'जले मत्स्याः' इत्यत्र जलैकदेशरूपाधारप्रदेशापेक्षया चैतदौपश्लेषाधिकरणम्। 'गुरौ वसति' इति शिष्याणां गुर्वाधीनायां वृत्तौ गुरुसमीपस्थितौ वैषयिकमधिकरणं गुरुः सर्वावयवानां व्यस्तानां समस्तानां वा स्थित्याधारतया अनपेक्षणात्। गुरुशिष्योरा-धाराधेयभावरूपः सम्बन्धोऽप्यत्र बौद्धः। एवं 'युद्धे सन्नह्यति' इत्यत्र युद्धाभिप्रायेण कवचखड्गादिबन्धनरूपस्य सन्नहनस्य प्रवृत्तेर्युद्धः विषयः। 'गङ्गायां गावः' इत्यत्र गङ्गाशब्दः स्वशक्यार्थप्रवाहसामीप्यात् तटरूपे प्रदेशे लक्षणया गङ्गाशब्दार्थैकदेशे वृत्तिरित्यौपश्लेषिकमधिकरणम्। शत्रोरभावे सुखम् इत्यादावभावस्य बौद्धमुपश्लेषमादाय अधिकरणकारकत्वम्।

वस्तुतस्तु 'गुरौ वसति', 'युद्धे सन्नह्यति' शत्रोरभावे सुखं जायते इत्यादौ सर्वत्रैव सत्सप्तम्यैव निर्वाहः समुचितः, बौद्धोपश्लेषसमाश्रयेण वैषयिकाधिकरणत्व-कल्पनाया गुरुतराया अगतिकगतित्वात्। यद्वा अन्तरङ्गत्वहेतुमूलकेन **उपपदविभक्तेः कारकविभक्तिर्बलीयसी** इति न्यायेनात्र अधिकरणत्वं न्याय्यम्।

### 6. उपसंहृतिः

'अधिकरणस्वरूपविमर्शः' इत्यभिधे लघुप्रबन्धेऽस्मिन् अधिकरणस्वरूपं तद्भेदाश्च प्रतिपादयितुमनसा आदावेव कारकस्वरूपं प्रतिपादितम्। तत्र प्राचीनां मते 'क्रियानिमित्तं कारकम्' इत्यादिलक्षणं तत्र दोषाश्च विमृश्य दीक्षितमते 'क्रियान्वयित्वं कारकत्वम्' इति कारकस्वरूपं प्रतिपाद्य नागेशमते पक्षेऽस्मिन् दोषान् निरूप्य तन्मते 'क्रियाजनकत्वं कारकत्वम्' इति सिद्धान्तलक्षणं प्रतिपादितम्।

तदनु अधिकरणस्वरूपं विचारितम्। क्रियाधारस्य अधिकरणसंज्ञा भवति। धातोरर्थद्वयं भवति फलं व्यापारश्च। अर्थात् फलाधारस्य व्यापाराधारस्य च अधिकरणसंज्ञा भवति। परन्तु व्यापाराश्रयतया व्यापराधारस्य कर्तृसंज्ञा प्राप्ता। फलाश्रयतया फलाधारस्य कर्मसंज्ञा प्राप्ता। परत्वात् कर्तृकर्मसंज्ञाभ्याम् अधिकरणसंज्ञायाः बाधः भवति। साक्षादाधारस्य पराभ्यां कर्तृकर्मसंज्ञाभ्यामाक्रान्तत्वात् सूत्रमिदं व्यर्थं सज्ज्ञापयति यत् परम्परया तदाश्रयस्य ग्रहणं भवति।

तच्च अधिकरणं त्रिविधम्। यत्राधेय आधारे समवायसम्बन्धेन तिष्ठति तदभिव्यापकम्। तच्च आधारस्य सम्पूर्णावयवे आधेयस्य सत्ताया व्याप्तिरेव। यत्र च तयोः सामीप्यसम्बन्धः संयोगसम्बन्धो वा तदौपश्लेषिकम्। तदुभयातिरिक्तं यत्राधेय आधारे विषयतासम्बन्धेन तिष्ठति तद्वैषयिकमधिकरणमिति। नागेशेन परमलघुमञ्जूषां वैषयिकाधिकरणस्य उदाहरणं प्रदत्तं कटे आस्ते, जले मत्स्या इति। परन्तु तेनैव

शेखरे लघुमञ्जूषायाञ्च कटे आस्ते इति औपश्लेषिकाधिकरणत्वेन प्रतिपादितम्। *तत्त्वबोधिन्यां* ज्ञानेन्द्रसरस्वतिना **"नद्यामास्त इत्याद्यर्थं सामीपिकमधिकरणं चतुर्थमपि केचिदिच्छन्ति"**[1] इत्युक्त्वा चतुर्थमपि अधिकरणं प्रतिपादितम्। वररुचिकृते *प्रगोगसंग्रहे* व्यापकम् औपश्लेषिकं वैषयिकं सामीपकमिति चतुर्विधमधिकरणं प्रतिपादितम्। *शब्दार्थरत्नग्रन्थे* वाचस्पतिभट्टाचार्येण औपश्लेषिकाधिकरणस्यैव सामीप्यसम्बन्धेन एकदेशसम्बन्धेन चेति भेदद्वयं प्रतिपादितम् इति शम्।

## परिशीलितग्रन्थसूची


1. कौण्डभट्टकृतः *वैयाकरणभूषणसारः।* बालकृष्णपञ्चोलीसंपादितः। वाराणसी, चौखम्बा-संस्कृत-संस्थानम्, 2006।
2. गुरुपदहालदारकृतं *व्याकरण दर्शनेर इतिहास* कलिकाता : संस्कृत-बुक्-डिपो, 2006।
3. नागेशभट्टकृतः *लघुशब्देन्दुशेखरः।* तेजपालशर्मासंपादितः। वाराणसी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः, 2006।
4. नागेशभट्टकृता *परमलघुमञ्जूषा।* आचार्यलोकमणिदाहालसंपादिता। वाराणसी : चौखम्बा-सुरभारती-प्रकाशनम्, 2009।
5. नागेशभट्टकृता *परमलघुमञ्जूषा।* जयशंकरलालत्रिपाठिसंपादिता। वाराणसी, कृष्णदास-अकादेमी, 2003।
6. पतञ्जलिकृतं *महाभाष्यम्।* शिवदत्तशर्मासंपादितम्। देहली: चौखम्बा-संस्कृत प्रतिष्ठानम्, 2014।
7. पाणिनिकृता *अष्टाध्यायी।* दीक्षितपुष्पासंपादिता। नवदेहली : संस्कृतभारती, 2010।
8. भट्टोजिदीक्षितकृता *प्रौढमनोरमा।* व्याख्याकारः रमाकान्तपाण्डेयः। वाराणसी, चौखम्बा-विद्याभवनम्, 2007।
9. भट्टोजिदीक्षितकृता *वैयाकरणसिद्धान्तकौमुदी।* परमेश्वरशर्मा संपादिता। वाराणसी, मोतीलाल-बनारसीदासः, 2010।
10. भर्तृहरिकृतं *वाक्यपदीयम्।* हरिनारायणतिवारिसंपादितम्। वाराणसी, चौखम्बा-संस्कृत-सीरीज-आफिस्, 2015।


---

1. *वैयाकरणसिद्धान्तकौमुदी*, प्रथमो भागः, सप्तम्यधिकरणे च, पृ० 694।

11. वररुचिकृतः *प्रयोगसंग्रहः*। भारतभूषणत्रिपाठिना संपादितः। वाराणसी, भारतीय-विद्या-संस्थानम्, 2010।

12. वामनजयादित्यकृता *काशिका*। जयशङ्करलालत्रपाठिना सुधाकरमालवीयेन च संपादिता। वाराणसी, तारा-बुक्-एजेन्सी, 1985।

13. श्रीतारानाथ-तर्कवाचस्पति-भट्टाचार्येण विरचितं *शब्दार्थरत्नम्*। कलिकातानगर्य्यां वि, एल, यन्त्रे श्रीदक्षिणाचरणचक्रवर्तिना मुद्रितम्, 1902 (तृतीयं संस्करणम्)।



 ISSN : 0975-1769

# भावक्रिययोर्द्वैविध्यनिरूपणम्

**डॉ. पी.आर्. अर्चना कारानाथ***

["व्यापारो भावना सैवोत्पादना सैव च क्रिया" इति व्यापारार्थकाः नैके शब्दाः शास्त्रेऽस्मिन् दरीदृश्यन्ते। तत्र व्यापारार्थकौ भावः, क्रिया इतीमौ शब्दौ अतिप्रसिद्धौ। व्यापारार्थाभिधायकौ एतौ शब्दौ बाहुल्येन यद्यपि परस्परं समानार्थकौ, अथापि क्वचित् स्थलेषु भिन्न-भिन्नार्थमुपस्थापयतः। क्व तेषां अर्थव्यत्ययः दृश्यते, कीदृगर्थभेदश्च दृश्यते इत्येते विचाराः अत्र प्रबन्धे चर्च्यन्ते। किञ्च भाव-क्रिययोः अवान्तरभेदाः अपि सलक्षणं, सोदाहरणमत्र निरूपिताः सन्ति]

**भावः पदार्थसत्तायां क्रियाचेष्टात्मयोनिषु।**
**विद्वल्लीलास्वभावेषु भूत्यभिप्रायजन्तुषु॥**[1]

इति नानार्थरत्नमालाख्यकोशे भावशब्दस्य नानार्थाः उपदर्शिताः। उत्पत्त्यर्थकात् भूधातोः **हेतुमति च**[2] इति णिचि, **णेरनिटि**[3] इति णिलोपे भावशब्दः निष्पद्यते। तथाहि उत्पत्त्यनुकूलव्यापारः, भावशब्देन विवक्ष्यते अर्थात् धात्वर्थरूपा क्रिया एव भावः। तदुक्तं भाष्ये-**धात्वर्थः** केवलः शुद्धो भाव इत्यभिधीयत इति। कौमुद्यां दीक्षितैरप्यगादिभावो भावना उत्पादना क्रिया इति।

तथा च **भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि**[5] इति निरुक्ते यास्कः। नामाख्यातोपसर्गनिपाताश्चेति चतुर्विधं पदं निर्दिश्य नामाख्यातयोर्लक्षणं प्रवक्तुमिमे वाक्ये तेनाभिहिते। आख्यातं-तिङन्तं, भावः-क्रिया। भाव्यते अनेनेति करणव्युत्पत्त्या, भूयतेऽसाविति कर्मव्युत्पत्त्या उभयोः फलव्यापारयोस्तेन ग्रहणम्। शाब्दबोधे तिङन्तानि क्रियाप्रधानानि, सुबन्तानि द्रव्यप्रधानानि भवन्तीति तदर्थः। तदुक्तं निरुक्तभाष्ये दुर्गाचार्येण-'**भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्य**, तत्र भावः प्रधानम्'[6]

---

* अतिथि अध्यापकः, व्याकरणविभागः, कर्नाटकसंस्कृतविश्वविद्यालयः, बैंङ्गलूरु।

1. सि.कौ., बालमनोरमा व्याख्या पृ.सं. 589
2. अ.सू. 3/1/26
3. अ.सू. 6/4/51
4. सि.कौ., भाग 3, पृ.सं. 589
5. निरु. 1/1/1
6. निरु. व्या. 1-1-1

इति। प्रकृते भावशब्देनोभयोर्ग्रहणात् कर्मणि प्रयोगे फलस्य प्राधान्यमित्यप्यर्थः सेत्स्यति।

एवमेव क्रिया नाम धात्वर्थव्यापार एव। तत्र यदा क्रियते असाविति कर्मव्युत्पत्तिः समाश्रियते तदा क्रियाशब्दः फलपरः, क्रियते निष्पाद्यते अनया इति करणव्युत्पत्तौ क्रियाशब्दः व्यापारार्थकश्च। यद्वा क्रियाशब्देन यौगिकशक्त्या फलस्य, रूढिशक्त्या व्यापारस्य चाभिधानम्।

भावः क्रियेत्यनर्थान्तरमित्यनुपदमेव निरूपितम्। परं **"भूवादयो धातवः"** इति धातुसंज्ञाविधायके शास्त्रे **"णेरणौ यत्कर्म णौ चेत्स कर्तानाध्याने"**[1] इत्यात्मनेपदविधायकसूत्रे, **"कर्मवत्कर्मणा तुल्यक्रियः"**[2] इति कर्मवद्भावविधायकसूत्रे च भावक्रिययोः परस्परम् अर्थविभिन्नता भाष्यकारैः प्रोक्ता। एतदन्यत्र स्थले भावः-क्रिया इति शब्दाभ्यां सपरिस्पन्दापरिस्पन्दसाधारणः धात्वर्थः परिगृह्यते। अत एव **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः**[3] इति सूत्रे भाष्ये न **ह्यस्तिः क्रियावचनः** इति पूर्वपक्षिणा कथिते **कः पुनराह नाऽस्ति क्रियावचनः इति।** क्रियावचनोऽस्तिः इत्यभिदधुः भाष्यकाराः।[4] तदाशयमुपवर्णयन्कैयटः[5] प्राह – "परिस्पन्दरूपस्यैवार्थस्य क्रियात्वात्, अस्तेः तदभावात् संशयः। समाधानं तु कर्मस्थभावकानां कर्मस्थक्रियाणाञ्चेति कर्मवद्भावविधायक-सूत्रादन्यत्र क्रियाशब्दः धात्वर्थमात्रवृत्तिपरः (अपरिस्पन्दसपरिस्पद-सर्वसाधारणः)। अस्त्यादौ तादृशक्रियायाः सत्वात् क्रियावचनत्वं तस्याक्षतम्। कर्मवत्सूत्रे तु भाव-क्रिययोः भेदेनोपादानात् परिस्पन्दलक्षणविशिष्टः क्रियाशब्दः समाश्रीयते" इति।

तथा हि सपरिस्पन्दसाधनसाध्यः धात्वर्थः क्रिया, सपरिस्पन्दापरिस्पन्दसाधनसाध्यः धात्वर्थः भाव इति तयोर्वैलक्षण्यम्। परिस्पन्दः-चेष्टा, साधनं-कारकं, तच्च सन्निहितत्वात् कर्तृकारकमेव, परिस्पन्दस्य चेतनधर्मत्वात् कर्तर्येव तस्य सम्भवात्। चेष्टादि-परिस्पन्द-सहितेन कर्त्रा साध्यः धात्वर्थः क्रियेति भण्यते। परिस्पन्दरहितेन परिस्पन्दसहितेन च कर्त्रा साध्यः धात्वर्थः भावः। यथा पाकः, दर्शनम्। तत्र पाकादिस्थले देवदत्तादौ कर्तरि चलनादिरूपपरिस्पन्दादेर्दर्शनात् तेन साध्यः धात्वर्थः क्रियेत्याख्यायते। दर्शन-श्रवणादौ तादृशपरिस्पन्दादेरदर्शनात् तत्र कर्त्रा साध्यः धात्वर्थः भावः। यद्यपि दर्शने

---

1. अ. सू. 1/3/67
2. अ. सू. 3/1/87
3. अ. सू.8/3/87
4. म.भा. 8/3/87
5. प्रदी. व्या. 8/3/87

चक्षुरुन्मीलनादिरूपस्पन्दनं वर्तते तथापि तद्भिन्न-हस्तपादादिचेष्टाया एव स्पन्दनपदेन विवक्षणात् दर्शनादौ तदभावात् दृश्धात्वर्थः भाव एव।

उभेऽपि भावक्रिये द्विविधे। कर्तृस्थभावकः-कर्मस्थभावकः, कर्तृस्थक्रियकः-कर्मस्थक्रियकश्चेति। कर्तृस्थो भावो येषां ते कर्तृस्थभावकाः। कर्तृस्था क्रिया येषां ते कर्तृस्थक्रियकाः। यत्र कर्मणि क्रियाकृतो विशेषः-वैलक्षण्यं दृश्यते-प्रत्यक्षमुपलभ्यते सः धातुः कर्मस्थक्रियकः। यत्र क्रियाकृतः विशेषः कर्मणि नावलोक्यते किन्तु कर्तरि सः धातुः कर्तृस्थक्रियकः। यद्वा यद्धातुवाच्यकृतः कश्चन विशेषः तत्क्रियाकर्मणि उपलभ्यते सः धातुः कर्मस्थक्रियकः। यद्धातुवाच्य-क्रियाकृतः विशेषः कश्चिदपि तत्क्रियाकर्मणि नोपलभ्यते सः धातुः कर्तृस्थक्रियकः। एवं यत्र कर्मणि भावकृतं वैलक्षण्यमवलोक्यते सः कर्मस्थभावकः धातुः। यत्र च भावकृतो विशेषः कर्मणि नावलोक्यते सः धातुः कर्तृस्थभावक इत्यभिधीयते।

सौकर्यातिशयद्योतनाय कर्तृगतव्यापारम् अविवक्षित्वा कर्मादि-कारकान्तर्गतव्यापारः यदा विवक्ष्यते तदा कारकान्तराण्यपि कर्तृसंज्ञां लभन्त इति काचिद्व्यवस्था शास्त्रे उपदर्शिता, येन कर्मकर्तृप्रयोगः सिध्यति। तत्र कर्मणः कर्तृत्वविवक्षायां पूर्वं सकर्मका अपि धातवः अकर्मका भवन्तीति तेभ्यः भावे-कर्तरि च लकारः। तत्र कर्तरि लकारे कर्तुः कर्मवद्भावः प्रोच्यते कर्मवत्कर्मणा इत्यादिसूत्रेण। कर्मस्थभावकाः, कर्मस्थक्रियकाश्च धातवः उदाहरणत्वेनात्र द्रष्टव्याः। तथा हि कर्मवत्कर्मणा इत्यादि सूत्रे तथा कर्मस्थभावकानां **कर्मस्थक्रियकाणाञ्च** इति वार्तिककारः। कर्मस्थभावकानां, कर्मस्थक्रियाणाञ्च कर्ता कर्मवद्भवतीति तदर्थः समुपावर्णि भाष्यकृता।[1]

तण्डुलः पच्यते, भिद्यते काष्ठम्, घटः क्रियते स्वयमेवेति कर्मस्थक्रियकाणा-मुदाहृतयः। तण्डुलः पच्यते, भिद्यते काष्ठमित्यत्र कर्मणोः तण्डुलकाष्ठयोः दृश्यते किञ्चित्क्रियाकृतं वैशिष्ट्यम्। यथा अपक्वतण्डुलापेक्षया पक्वतण्डुले मृदुत्वम्, अच्छिन्नकाष्ठापेक्षया छिन्नकाष्ठे लघुत्वम्। अतो हेतोः पच्यादयः कर्मस्थक्रियका इत्यभिधीयन्ते। ततश्च तण्डुलं पचतीत्यत्र तण्डुलरूपकर्मणः कर्तृत्वेन विवक्षायां धातोरकर्मकत्वात् कर्तरि लकारे, कर्तुः तण्डुलस्य कर्मवद्भावस्यातिदेशेन यगात्मनेपदयोः कृतयोः तण्डुलः पच्यते इति रूपम्। कृञः यत्नार्थकत्वमिति नैयायिका ऊचुः। परं **कृञोऽकर्मकतापत्तेः नहि यत्नोऽर्थ इष्यते**[2] इति कथनपुरःसरं यत्नार्थकत्वं तस्य निरस्य उत्पत्तिरूपमर्थमाहुः शाब्दिकाः। तेन घटः क्रियते इत्यादौ घटरूपकर्मणि उत्पन्नानुत्पन्नकृतवैलक्षण्यस्य स्पष्टं प्रतीतेः कर्मस्थक्रियावाचकत्वं कृञः पर्यवस्यति येन कर्मवद्भावेन यगात्मनेपदे प्रवर्तेते।

---

1. म. भा. 3/1/87
2. वै. मतो. का. सं. 5

कर्मस्थभावको यथा-आसयति देवदत्तं यज्ञदत्तः, शाययति देवदत्तम्, स्थापयति देवदत्तमित्यादि। आसनशयनादिक्रियया देवदत्तरूपकर्मणि क्रियाकृतविशेषाणां शरीरावयवानां प्रसारण-आकुञ्चनादीनां (सन्निकृष्टदेशसंयोगानुकूला क्रिया) प्रत्यक्षत्वात् प्रयोजककर्तरि यज्ञदत्ते परिस्पन्दादीनाम् अदर्शनात् ण्यन्तानाम् आसयत्यादीनां कर्मस्थ-भावकत्वम्। ततश्च कर्मकर्तरि देवदत्तः आस्यते, देवदत्तः शय्यते(ण्यन्तात्) इति रूपे। कर्मस्थभावकानां शुद्धाः धातवः नोपलभ्यन्ते।

कर्तृस्थक्रियका यथा-गच्छति, धावति, हसति, हस्तिनं आरोहति। धावन-गमन-आरोहणादौ क्रियाकृतवैलक्षण्यस्य कर्मण्यदर्शनात्, परिस्पन्दादेः कर्तर्यवलोकनात् इमे कर्तृस्थक्रियका धातवः इति परिगण्यन्ते। चिन्तयति-मन्त्रयते-अधिगच्छति-पश्यतीत्यादयः कर्तृस्थभावकाः धातवः। पश्यत्यादौ क्रियाकृतविशेषस्य घटादि-कर्मस्वनवलोकनात्। अपि च कर्तरि हर्षचिन्तादि-लक्षणविशेषदर्शनेऽपि चेष्टादि-परिस्पन्दादेरदर्शनात् चिन्तीत्यादीनां कर्मस्थभावकत्वम्।

इमे कर्तृस्थभावकाः, कर्तृस्थक्रियकाश्च धातवः णेरणौ यत्कर्म णौ चेत् इत्यात्मनेपदविधायकशास्त्रे उदाह्रियन्ते। आध्यानभिन्नेऽर्थे वर्तमानात् ण्यन्तादात्मनेपदं स्यात्, अणौ या क्रिया सैव ण्यन्तेनोच्येत, अणौ यत्कर्मकारकं स णौ कर्ता चेत् इति सूत्रार्थः। सूत्रेऽस्मिन् कक्षाचतुष्टयम् वर्तते।

तथा हि प्रथमसोपाने 'भक्ताः भवं पश्यन्ति' इति शुद्धधातोः सर्वसाधारणः प्रयोगः। अत्र चाक्षुषज्ञानविषयत्वापत्त्यनुकूलः व्यापारः, चाक्षुषज्ञानविषयत्वापत्तिः फलमिति तदाश्रययोः भक्त-भवशब्दयोः यथाक्रमं कर्तृत्व-कर्मत्वे। पूर्ववाक्येन 'भवः चाक्षुषज्ञानाश्रयो भवति, भक्ताः विशिष्टेन स्वप्रयत्नेन भवं चाक्षुषज्ञानाश्रयं कुर्वन्ति' इति प्रतीयते। यदा चाक्षुषज्ञानविषयत्वापत्त्यनुकूलव्यापारं कर्तृगतमविवक्षित्वा चाक्षुषज्ञानविषयत्वापत्तिरेव दृशेरर्थ इति स्वीक्रियते तदा 'भवः पश्यति' इति प्रयोगः सम्पद्यते, द्वितीयसोपानमिदम्[1]। ततः पूर्वं परित्यक्तस्य भक्तानां व्यापारस्य भवप्रयोजकव्यापारवत्वेन विवक्षायाम् अर्थात् स्वयं चाक्षुषज्ञानविषयभावमापद्यमानं भवं भक्ताः साहाय्याचरणेन प्रयोजयन्ति इति विवक्षायां दृशेः णिचि, 'भक्ताः भवं दर्शयन्ति' इति प्रयोगः तृतीयकक्षायाम्। पुनस्तत्र कर्तुः सौकर्यातिशयविवक्षया, भक्तगतव्यापारस्य परित्यागे, भवगतव्यापारस्य प्राधान्यविवक्षायां तस्यैव धातुवाच्यत्वे 'दर्शयते भवः' इति वाक्यं निष्पद्यते। प्रकृते भक्ताः भवं पश्यन्तीति अण्यन्तकक्षायां कर्म भवः, स एव 'दर्शयते भवः' इति ण्यन्तावस्थायां (चतुर्थसोपाने) कर्ता सम्पन्नः। ण्यन्तः दृश्धातुश्च अध्यानभिन्नार्थकः। तथा च दर्शयते भव इत्यत्र ण्यन्तात् धातोरात्मनेपदं प्रकृतसूत्रेण जोघुष्यते।

---

1. दृशेः कर्तृस्थभावकत्वात् कर्मस्थभावकत्वाभावात् कर्मवत्कर्मणा इति कर्मवद्भावाभावः, तेन यगात्मनेपदयोरश्रवणम्।

हरिस्तावत् **लक्षणहेत्वोः क्रियायाः**[1], **यस्य च भावेन भावलक्षणम्**[2] इत्यादौ क्रिया-भावयोः अभेदव्यवहार इव प्रकृतेऽपि तयोः सपरिस्पन्दापरिस्पन्दकृत-विशेषमुपेक्ष्य सर्वसाधारणतया कर्तृस्थभावकः-कर्मस्थभावकश्चेति धातोः द्वैविध्यं प्रादर्शीत्। उक्तं हि तेन -

**विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता।**
**क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता॥** इति।[3]

यत्र धात्वभिव्यक्तवैशिष्ट्यं कर्तरि-कर्मणि उभयसाधारणतया उपलभ्यते सः धातुः कर्तृस्थभावकः अथवा कर्तृस्थक्रियकः। यथा घटं पश्यतीत्यादौ दर्शनरूपं फलं कर्तरि, कर्मणि चेत्युभयत्रापि साधारणतयोपलभ्यते। अतः सः कर्तृस्थक्रियकः। यत्र तु कर्मण्येव फलस्याभिव्यक्तिः न तु कर्तरि सः कर्मस्थक्रियकः। काष्ठं भिद्यते इति यथा। तत्र हि भेदनफलस्य न कदापि कर्तर्यवस्थितिः।

परमेवं निगदिते सति पच्यादीनां कर्मस्थभावकानामपि कर्तृस्थभावकत्वप्रसङ्गः, कर्मणीव कर्तर्यपि परिश्रमरूपविशेषदर्शनात्। तस्मात् द्वितीयः पक्षः समाश्रितः क्रियाव्यवस्था त्वन्येषामिति। अर्थात् यत्र कर्तृकर्मसाधारणरूपं फलं शब्देन-धातुना प्रतिपाद्यते-प्रकाश्यते सः कर्तृस्थभावकः। यत्र कर्त्रवृत्तिकर्मस्थफलं सः कर्मस्थभावकः। पच्यादिषु कर्तरि श्रमादीनामुपलब्धावपि तस्य अभिधानगोचरत्वाभावात् न तेषां कर्तृस्थभावकत्वम्।

**सन्दर्भग्रन्थसूची** -


1. पाणिनीयः अष्टाध्यायी सूत्रपाठः, पूर्वपीठिका-सूत्रविवरणात्मक 'प्रह्लाद' टिप्पणीसहितः, चौखम्बा कृष्णदास अकादमी।
2. आचार्यभर्तृहरिप्रणीतम् वाक्यपदीयम्, व्याख्याद्वयोपेतम्, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः।
3. श्रीमन्महर्षिपतञ्जलिविनिर्मितं व्याकरणमहाभाष्यम्, भाष्यप्रदीपोद्योतसमुलसितम्, चौखम्बा संस्कृत प्रतिष्ठानम् 2007
4. काशिकावृत्तिः, न्यास-पदमञ्जरी व्याख्याभ्यां सहिता, संपादकौ स्वामी द्वारिकादासः शास्त्री, पं. श्रीकालिकाप्रसादशुक्लः, प्रकाशनम् - प्राच्यभारती 1965


---

1. अ. सू. 3/2/126
2. अ. सू. 2/3/37
3. वा.प., सा. समु., 66

5. भट्टोजिदीक्षितविरचिता सिद्धान्तकौमुदी (बालमनोरमा–तत्त्वबोधिनी व्याख्याभ्यां समन्विता) मोतीलाल बनारसीदास।

6. महामहोपाध्यायनागेशभट्टविरचितः परमलघुमञ्जूषा, किरणावली व्याख्योपेता, चौखम्बा संस्कृत प्रतिष्ठानम्।

7. श्रीमत्कौण्डभट्टविरचितः वैयाकरणभूषणसारः, प्रभा–दर्पणव्याख्याद्वयोपेतः, चौखम्बा संस्कृत प्रतिष्ठानम्।

8. नागेशभावप्रकाशसहिता लघुमञ्जूषा, व्याख्या - पेरी सूर्यनारायणशास्त्री।

9. महामहोपाध्यायनागेशभट्टविरचितः लघुशब्देन्दुशेखरः, चौखम्बा संस्कृत प्रतिष्ठानम्।



# पुरन्ध्रीपञ्चके पुरन्ध्रीहृदयस्य विविधपक्षाः

**डॉ. पङ्कजाघईकौशिकः***

**सारांशः**

विंशतिश्शताब्द्यां तदुपरान्तं च संस्कृतेन लिखितः वाङ्मयमाधुनिकसंस्कृत-साहित्यरूपेणावगम्यते इति। आधुनिकसंस्कृतसाहित्ये स्त्रीकाव्यकर्त्रीणां योगदान-मुल्लेखनीयम् वर्तते। एतास्वेव डा-वेदकुमारीघईमहोदयाया अभिधानं प्रामुख्येन स्थीयते। तासाम् ऊर्मिकेति काव्यसंग्रहः 'पुरन्ध्रीपञ्चकमिति रूपकसंग्रहश्च वर्तेते। संग्रहयोरेतेयोः डा. घईमहाभागया स्त्रीणां विविधभावाः साकारिताः। पत्रेऽस्मिन् स्त्रीणां हृदयस्य विविधपक्षानाधृत्य घईमहोदयया विरचितपुरन्ध्रीपञ्चकात् समीक्षात्मक-मध्ययनं प्रस्तूयते। विस्तृतरूपेण पुरन्ध्रीणां विविधपक्षाः अत्र समालोचिताः।

## पुरन्ध्रीपञ्चकम्

पुरन्ध्रीपञ्चकं पञ्चरूपकाणां संग्रहः अस्ति। पुरन्ध्रीपञ्चके पञ्चरूपकेषु पञ्चविशिष्टपुरन्ध्रयः दृश्यन्ते। 'मेनकावात्सल्ये' मेनका, 'अपूर्वप्रतिशोधे' द्रौपदी, 'मदालसायां' मदालसा, 'सुगन्धायां' सुगन्धा, 'द्राक्षामतःशकुन्तलायां' शकुन्तला च। मनोवैज्ञानिकरूपेण एतेषां पुरन्ध्रीणां हृदयस्य विविधपक्षाः प्रतिपादिताः। एतेषां रूपकाणां कथा मूलतः पूर्वतनसंस्कृतवाङ्मयादेव गृहीता परं त्वेतेषां प्रस्तुतिः आधुनिकी। मूलस्रोतृषु एतेषां स्त्रीपात्रणां वेदना-संतापदृढता-क्षमाशीलता-विक्रम-धैर्य-वैदुष्यप्रभृति-वैशिष्ट्यं तावन्न प्रस्फुटितं यथा एतेषु रूपकेष्वनुभूयते।

## मेनका

'मेनकावात्सल्ये' शकुन्तलायाः मातुः मेनकायाः अस्थिरभावाः प्रतिपादिताः, एकस्याः गणिकायाः वेदना चित्रिता। मेनका इन्द्रसभायामेका प्रमुखगणिका अस्ति। समाजे सम्मानपुरस्सरं जीवनयापनस्योत्कटेच्छास्ति तस्याः परं पुरूषस्य वञ्चनां स्वसन्ततेः वियोगञ्च लभते सा। यद्यपि इन्द्रसभायां धर्मयुक्तसत्यकथनावसरे तस्याः साहसः दृश्यते परं तु यदा तत् सत्यकथनं देवराज्ञा इन्द्रेण निराक्रियते तदा अन्तर्द्वन्द्वं

* संस्कृतविभागः, लेडीश्रीराममहाविद्यालयः, दिल्लीविश्वविद्यालयः, लाजपतनगरदिल्लीनगरम्

सहन्ती वैवश्येन तस्याज्ञां पालयति। ईदृशीभ्यः विवशताभ्यः यः क्लेशः पुरन्ध्रीणां मनसि भवति तस्योत्तमाभिव्यक्तिः मेनकायाः मनोस्थित्या प्रदर्शिता। किन्तु अन्यस्मिन् प्रसङ्गे तादृशी विदुषी बुद्धिमती च पुरन्ध्री न किञ्चित् पूर्वं निर्धार्य अनभिज्ञपुरूषाय आत्मानं समर्पयति अनन्तरं वञ्चनां प्राप्नोति इति कष्टप्रदः। प्रसङ्गेऽस्मिन् नार्याः गरिमा क्षीणत्वमवाप्नोति ननु। पुरूषगुणविज्ञानप्रसङ्गे पुरन्ध्रीणां कातरस्वभावः मनसः दौर्बल्यमेव च प्रदर्शितमत्र। अस्मिन्नेव रूपके ऋषिकण्वेन स्त्रीपुरूषयोः कष्टपूर्णास्थितिः निरूपिता।[1] मेनका दृढसंकल्पयुक्ता पुरन्ध्री अस्ति, सा स्वसन्ततेः कल्याणाय दृढनिश्चयेन विकटपरिस्थितिष्वपि सततप्रयत्नशीला एव तिष्ठति।

**द्रौपदी**

महाभारतयुद्धास्यान्तिमे चरणे घटिता एका मर्मस्पर्शिणी घटना अंकिता अपूर्वप्रतिशोधरूपके। गुरूद्रोणाचार्यस्य अश्वत्थामानाम्ना पुत्रेण द्रौपद्याः पञ्चपुत्रः व्यापादिताः। कस्याचिदपि नार्याः कृते स्थितिरेयं अतीवकष्टकरा खलु। स्वाभाविकरूपेण स्वसन्ततेः घातकं प्रति नितान्तनिष्ठुरा कठोरा च भवति सा दुःखिता माता। पुत्राणां हन्तवे मृत्युरेव एकः प्रतिशोधः इति तस्याः कृते च शोकनिवारणोपायः। रूपकेऽस्मिन् द्रौपद्याः करूणप्रलापः प्राकृतिकोद्वेगश्च दर्शितः। अतीवकठोरप्रतिशोधस्य तीव्रेच्छा च व्यक्ता।[2] द्रौपदी विवाहानन्तरं बहुविधम् अपमानमसहत् तन्निमित्तञ्च तस्याः मनसि वेदना अपि आसीत्। पुरन्ध्रीणां स्वभावः यत् ताः सर्वविधान् कष्टान् एकामाशामाश्रित्य सहन्ति यत् तासां सन्ततिः ताभ्यः अपेक्षितं सुखं सम्मानं च प्रापयिष्यति। द्रौपद्याः सः नैसर्गिकः आशाबन्धः अपि विच्छिन्नः। द्रौपद्याः शोकः द्विगुणितः।[3] परं एतेन सहैव कुलीनपुरन्ध्रयाः माध्यमेन नार्याः उदात्तरूपं पश्यामः वयम्।[4] मत्सदृशं नान्या काचित् माता दुःखमवाप्नुयात् इति चिन्तयित्वा स्वपुत्रणां

---

1. नारीपुरूषयोः समाने अपराधे सति प्रायशः नारी एव कष्टं भजते। पत्नीविहीनः सन्तानयुक्तः आप पुरुषः पुनर्विवाहं शीघ्रम् एव रचयति परं पतिविहीना पत्नी प्रायशः वैधव्यदुःखपीडिता एवं समस्तं जीवनं यापयति। इति। पुरन्ध्रीपञ्चकं पृ. 9
2. अहं वाञ्छामि पुत्रवधस्य प्रतिकारं प्रतिशोधम्। दुष्टस्य हस्तौ खड्गेन छेत्तव्यो शिरः खण्डीकर्त्तव्यम्-----पुरन्ध्रीपञ्चकं पृ. 24
   पुत्रहन्तारं दग्ध्वा एव शमेष्यति सा नान्यथा---------- पुरन्ध्रीपञ्चकं पृ. 25
3. विवाहानन्तरं मया नानाकष्टानि भुक्तानि। नैकशः तिरस्कारः अनुभूतः परं बाला मे --------मम तिरस्काराणां प्रतिविधिं करिष्यन्ति इति आशाबन्धः---- अधुना सः आशाबन्धः अपि त्रेटितो। पुरन्ध्रीपञ्चकं पृ. 27
4. नहि नहि गुरुपत्नी पुत्रविहीना करिष्यते ----- पुरन्ध्रीपञ्चकं पृ. 29
   नाहमीदृशी पाषाहृदया यत् तस्याः क्रोडात् एकमात्रं पुत्रमपहरेयम्। जगति कापि अन्या माता अहमिव पुत्रविहीना न भवेत्। पुरन्ध्रीपञ्चकं पृ. 29

हन्तवे क्षमादानं करोति सा। पुत्रशोकेन विह्वलायाः एकस्याः मातुः इतरां मातरम् प्रति करूणभावः नारीहृदयस्य मृदुतमः रूपः अस्ति। नार्याः मृदुतमः रूपः तत्र दृश्यते यदा अश्वत्थामा द्रौपदीं 'मातः' इति शब्देन सम्बोधयति तदा द्रौपद्याः सर्वं रोषं निर्गच्छति तया च तस्मै क्षमायाचना दीयते।[1] प्रतिहिंसया हिंसा नापाकर्तुं शक्यते अपि तु अहिंसायाः संस्कारं स्थापयित्वा हृदयपरिवर्तनं सम्भवमिति द्रौपद्याः माध्यमेन[2] सन्देशः अत्र प्रदीयते। काव्यकर्त्री गान्धीविचारैः प्रभाविता इत्यत्र प्रतिभासते।

### मदालसा

मार्कण्डेयपुराणे वर्णिताख्यानमाधारिते मदालसारूपके नार्याः भव्यरूपं दर्शितम्। स्वाभिमानिनी, स्वाध्यायरता, विचारशालिनी मदालसा स्त्रीणां कृते निर्धारित्या परम्परारीत्या विवाहं निराकरोति। जीवनपथे स्वयमात्मनिर्भरां भूत्वा जीवनं यापयितुं सक्षमा अस्ति।[3] वस्तुतः रुपकेऽस्मिन् मदालसाकुण्डलयोः संवादे पुरन्ध्रीणां द्विविधा विचाराधारा प्रस्तुता, यदा मदालसा उत्साहेन कथयति यत् **'संगीतं साहित्यं च पठित्वा सरसरूपेण ब्रह्मविद्यां बालकान् पाठयिष्यामि'।** अत्र उदात्तलक्ष्यं प्रति तस्याः अभिरूचिः प्रदर्शिता। अन्यत्र च कुण्डलया अपि 'गृहस्थाश्रमे प्रविश्य स्वकीयबालकानां चरित्रनिर्माणरूपिणं' समाजकल्याणकरं व्यावहारिकपरामर्शं तस्यै प्रदत्तम्।[4] मदालसा पत्युः भृत्या सेविका वा भूत्वा न अपितु तस्य सहधर्मिणी सहयोगिनी च भूत्वा जीवनं यापयितुमिच्छति। यद्यपि सा स्वाभिमानिनी परं तु अहंकारिणी नास्ति।[5] उत्तमामातृरूपेण बाल्यकाले एव **शुद्धोऽसि वत्स बुद्धोऽसि वत्स---कस्य हेतोः रोदिषी** इति शयनगीतेन ब्रह्मज्ञानं बालकं प्रति सम्प्रेषयति। अयं ह्यद्भुतप्रयोगः अस्मिन् रूपके दृश्यते।[6] मदालसा निर्भीका पुरन्ध्री ननु। दुश्चरित्रं पुरुषं प्रति समर्पणात् स्वप्राणत्यागं श्रेयस्करं मन्यते।[7] यद्यपि सा ब्रह्मवादिन्यस्ति परं पतिपत्न्योः

---

1. मातः इति सम्बोधनेन सम्बोधिता अहं त्वया इत्यनेनैव प्रतिशोधो मे परिपूर्णोजातः। पुरन्ध्रीपञ्चकं पृ. 30
2. युद्धस्य परिणतिः तु विनाश एव, एकपक्षस्य वा द्वितीयपक्षस्य वा। पुरन्ध्रीपञ्चकं पृ. 21
3. स्वयं सक्षमा जीवनथे चलितुमहं न कस्यापि संकेतैः नर्तितुं पारयामि। पुरन्ध्रीपञ्चकं पृ. 35
4. पुरन्ध्रीपञ्चकं पृ. 35
5. आर्यपुत्र! मदीयं सर्वं भवदीयमेव ------। अहमत्रभवतः न केवलं पत्नी भवद् राज्ये सुखं वसन्ती महाराजस्य प्रजा अपि अस्मि। महाराजेन तं आज्ञापयित्वं न तु विज्ञापयित्वं। पुरन्ध्रीपञ्चकं पृ. 49
6. पुरन्ध्रीपञ्चकं पृ. 40
7. मार्गेतस्य दुष्चरित्रस्य---------पुरन्ध्रीपञ्चकं पृ. 39

मध्ये न कोऽपि भेदः भवति इति मदालसायाः गृहस्थाश्रमसम्बन्धी विचारः उत्तमः।[1] सा सगुणा शिक्षिका अपि अस्ति, स्वपुत्रान् तेषां योग्यतानुगुणं शिक्षयति। रुपकेऽस्मिन् मदालसायाः पर्यावरणचिन्तनमपि दृश्यते।[2] मदालसया प्रवृत्तिनिवृत्योः समायोजनं दर्शितं यदा पत्या सह वानप्रस्थं स्वीकर्तुं स्वमतिं सा प्रकटितवती।[3]

## सुगन्धा

सुगन्धारुपकं विशुद्धरुपेण राजनीतिकरुपकमस्ति। अत्र पुरन्ध्र्याः शासिकारूपं प्रदर्शितम्। राजशासने शासकस्य बहुविधं समर्पणमपेक्ष्यते। पत्युः पुत्रस्य च देहावसानात् परमपि सुगन्धा राज्यहिताय स्वकीयपीडां विस्मृत्य राज्ये उत्तमशासनव्यवस्थां स्थापयति। सा समर्पितशासिका भूत्वा समाजतः विकृतयः अपाकरोति, पुनश्च सर्वेषां कल्याणाय साम्याव्यवस्थामानयति। कथं हि पुरन्ध्री एका स्वार्थरहिता शासिका भूत्वा समाजकल्याणं कर्तुं समर्था भवति इति 'सुगन्धा' रुपके दृश्यते।[4]

## विलीना

द्राक्षामतः शकुन्तलारूपकं डेनमार्कदेशस्थ कविहोल्करद्राखमेनस्य जीवने आधारितमस्ति। शकुन्तला इति तस्य कवितामाधृत्य रचितेऽस्मिन् रूपके पतिपत्न्योः मध्ये विचारवैषम्यः सामञ्जस्यस्याभावश्च प्रदर्शितः। प्रेमविवाहानन्तरं पत्युः परिवर्तितेन व्यवहारेण पीडिताऽस्ति विलीना। नायिकया विलीनया सा नकारात्मिका मनोवृत्तिः प्रदर्शिता यया ग्रस्ता पुरन्ध्र्याः विवाहानन्तरं पत्युः परिवर्तितं आचरणं अन्यया नार्या सह योजयित्वा पश्यन्ति। एषः एव कातरः स्वभावः पुरन्ध्र्याः येन हि पुरुषः इतोऽपि असंवेदनशीलः भूत्वा कटुनिर्णयमङ्गीकरोति स्वस्याहंभावं च पोषयति। अस्मिनेव रूपके द्राक्षामतः अधिकारिणी मोनिकायाः माध्यमेन नार्याः विचित्ररूपः दृश्यते। सा पुरन्ध्रीणां तस्य वर्गस्य प्रतिनिधित्वं करोति याः हि अविवाहिताः सन्ति अस्मात् कारणात् निष्ठुराधिकारिणी भूत्वा अन्यजनानां समस्याः प्रति कठोराः असंवेदनशीलाश्च भवन्ति।[5]

## उपसंहारः

1. पुरन्ध्रीणां प्रकृत्याः विविधपक्षाः डॉ-घईमहोदयया उद्घाटिता उत्तमरूपेण च प्रतिपादिता।

---

1. कुतोऽवसरः याचनायाः परस्परम्। पुरन्ध्रीपञ्चकं पृ. 49
2. पुत्रदपि श्रेयस्करं वृक्षारोपणम्रस्ति ------- पुरन्ध्रीपञ्चकं पृ. 41
3. मया सह वानप्रस्थाश्रमः स्वीकर्तव्यः--------- पुरन्ध्रीपञ्चकं पृ. 50
4. पुरन्ध्रीपञ्चकं पृ. 58
5. पुरन्ध्रीपञ्चकं पृ. 75

2. डॉ.-वेदकुमारीमहाभागया यत्र स्त्रीणां मृदुपक्षाः स्थापिताः तथैव अपरत्र च अन्याय्यं प्रति तासाम् रोषः अपि दर्शितः। एतेषां पुरन्ध्रीणां चरित्रं अद्यतनीयानां स्त्रीणां कृते प्रेरणास्रोतरूपमस्ति। स्त्री दृढसंकल्पा स्यात् कठोरा न। मृदुत्वं स्त्रीणां स्वाभाविकं चरित्रम्। प्रतिष्ठामवाप्तुं मृदुत्वं नैव त्यक्तव्यम्। पुरन्ध्रीपञ्चके स्त्रीणां मृदुत्वं दृढसंकल्पत्वं चोभयोः चरित्रयोः संतुलनं चित्रितम्।



 ISSN : 0975-1769

# लक्षणाविमर्शः

## ( आचार्यमम्मटमुकुलभट्टमते च )

**कौशल किशोर प्रजापत***

**प्रस्तावना**- यथा प्रकृतौ सत्त्वरजतमोभिः गुणत्रयैः सकलचराचरमावृतं प्रवृत्तं च भवति, तथैव संसारेऽस्मिन् शब्दस्य लोकव्यवहाराय अभिधालक्षणाव्यञ्जना-शक्तित्रयं विद्यते; याभिः समस्तजनाः स्वस्य भावान् परस्परं प्रकटयन्ति। शब्दमाहात्म्यं प्रकटयन् आचार्यदण्डिना उक्तम्-

**इदमन्धतमः कृत्स्नं जायेत् भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।।**[1]

शाब्दबोधे पदज्ञानं प्रारम्भिकमाधारं भवति। पदज्ञानजन्यपदार्थस्मरणे शक्तिज्ञानं सहकारिकारणं भवति। अत्र शक्तिर्नाम पदपदार्थयोर्मध्ये सम्बन्धः। तदुच्यते-

**"अस्माच्छब्दादयमर्थः बोधव्य इति ईश्वरसंकेतः शक्तिः"**[2] इति।

साहित्यशास्त्रे शक्तिग्रहस्य नैके उपायाः सन्ति-

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।**[3]

केचिद् शक्तिस्थाने 'व्यापारः' शब्दं प्रयुञ्जते। वस्तुतः शब्दः कारणं भवति, तथा व्यापारः, यस्याधारोपरि अर्थस्य सिद्धिः भवति, शब्दशक्तीत्यभिधीयते। शब्दशक्तिः वस्तुतः शब्दार्थयोः सम्बन्धस्वरूपास्ति। मुख्यव्यापारेण अभिधया येषामर्थानां प्रतीतिः नैव सम्भवति, तेषां अवबोधनाय साहित्ये आचार्यैः लक्षणाव्यञ्जनेऽपि स्वीकृताः। केचिद् तात्पर्याख्यां वृत्तिमपि स्वीकुर्वन्ति। साहित्ये काव्ये वा लाक्षणिकप्रयोगाः तु अर्थसौन्दर्यं वर्धयन्ति, वक्तृवैशिष्ट्यं च सूचयन्ति इत्यत्र न कोऽपि सन्देहः। अत्र विषयदृष्ट्या लक्षणाप्रसङ्गमेव वर्ण्यते।

---

* शोधच्छात्र, जवाहरलाल नेहरू वि.वि. नई दिल्ली।

1. काव्यादर्शः 1.4
2. व्यक्तिविवेकः
3. शब्दशक्तिप्रकाशिका पृ. 103

संस्कृतस्य दर्शनग्रन्थेषु साहित्ये च उपचारः, विप्रकर्षः, अदूरः, भक्तिः, गुणवृत्तिः, जघन्यवृत्तिः, अमूल्यवृत्तिश्च एते शब्दाः लक्षणायाः पर्यायाः सन्ति। न्यायदर्शने लक्षणाविषये गूढचिन्तनं लभ्यते। 'उपचारः' इति लक्षणापर्यायः शब्दः गौतमस्य न्यायसूत्रे उपलभ्यते। साहित्ये अपि लक्षणायाः कृते अभिधापुच्छभूता (मम्मटः), अर्पिता शक्तिः, स्वाभाविकेतरा (विश्वनाथः) इत्यादीनि विशेषणानि प्रयोगे आनीतानि सन्ति।

लक्षणाविषये साहित्याचार्याणामुपरि मीमांसान्यायदर्शनयोः प्रभावो दृश्यते। लक्षणावर्णने तेषां प्रभावः सुस्पष्टमपि भवति। किन्तु लक्षणायाः भेद-प्रभेदविषये यादृशं चिन्तनं साहित्यशास्त्रे विहितं न तादृशं कुत्रापि।

साहित्येऽपि लक्षणोपरि द्वे मते स्तः। प्रथममतं लक्षणाविरोधिनः-महिमभट्टादयः 'लक्ष्यार्थस्य ज्ञानम् अनुमानप्रमाणेनैव भवति इति मन्यन्ते। द्वितीयमतं लक्षणावादिनां वर्तते, येषां मते लक्षणा अनिवार्याऽस्ति।

लक्षणायाः स्वरूपसम्बन्धेऽपि साहित्यिकानां मतद्वयमस्ति-

1. अभिनवगुप्तवामनभोजमम्मटविश्वनाथादीनां मतानुसारं लक्षणाज्ञानस्वरूपा।

2. अच्युतरायजगन्नाथाशाधरभट्टानां मतानुसारं लक्षणा सम्बन्धस्वरूपाऽस्ति।

**लक्षणा**- काव्यशास्त्रस्य आचार्याः मुख्यार्थस्य प्रतीतेरनन्तरं लक्ष्यार्थप्रतीतिहेतुत्वात् लक्षणाशब्दशक्तिं स्वीकुर्वन्ति। आचार्यः मम्मटः तां (लक्षणां) लक्षयति यत्-

**मुख्यार्थबाधे तद्योगे रुढितोऽथ प्रयोजनात्।**
**अन्योऽर्थो लक्ष्यते यत्सा लक्षणाऽऽरोपिता क्रिया।।**[1]

अस्यां कारिकायां आचार्यमम्मटेन लक्षणायाः कृते अनुबन्धत्रयं वर्णितम्-

1. सर्वप्रथमं मुख्यार्थबाधः।

2. लक्षणया अभिप्रेतार्थमुख्यार्थयोर्मध्ये सम्बन्धः। (सामीप्य-अंगांगिभाव-सादृश्य-तात्कर्म्य-स्वामिभृत्यभाव इत्यादयः)।

3. रूढिप्रयोजनयोर्वा अन्यतरस्य उपस्थितिः। तात्पर्यमस्ति यत् लक्षणया प्रतीतार्थे परम्परायां विदितार्थस्य प्रयोगः अथवा प्रतीयमान अर्थस्य बोधाय विशिष्टलक्षक-शब्दस्य प्रयोगेन वक्तुः किञ्चिदभिप्रेतार्थो भवेत्।

यथा-1. कलिङ्गः साहसिकः 2. गङ्गायां घोषः।

लक्षणायाः त्रीणि भेदकतत्त्वानि-1.अर्थ-उपादेयार्थस्य आदानं स्वार्थस्य समर्पणं वा (उपादान-लक्षणलक्षणा)।

---

1. काव्यप्रकाश, 2.9

2. सम्बन्धः-सादृश्यम्, सादृश्येतर कार्यकारणादि (शुद्धा-गौणी)। अत्र आचार्य-मम्मटः 'उपचारः' मनुते।

3. लक्षणार्थस्य वाचकपदस्य प्रयोगदृष्ट्या-पूर्वोक्तोपरि आश्रितम् (सारोपा-साध्यवसाना)

काव्यशास्त्रीयाचार्यैः स्वीकृतमुख्यार्थबाधस्य स्थाने प्राचीननैय्यायिकैः अन्वयानुपपत्तिं लक्षणायाः मूलहेतुरुपेण अङ्गीकृतमासीत्। किन्तु परवर्तिभिः नैयायिकैः (विश्वनाथपञ्चाननादिभिः) अन्वयानुपपत्तेः स्थाने तात्पर्यानुपपत्तिः स्वीक्रियते। प्रसिद्ध-वैयाकरणः 'नागोजिभट्टोऽपि इमामेव स्वीकरोति। परं साहित्यशास्त्रे नेदं विवादविषयो वर्तते।

**मुकुलभट्टस्य मते लक्षणास्वरूपं विभागञ्च**- काव्यशास्त्रे मुकुलभट्टस्य एकमात्रकृतिरेव प्राप्यते 'अभिधावृत्तमातृका'। ग्रन्थेऽस्मिन् मुकुलभट्टः शब्दस्य केवल-मभिधावृत्तिमेव मन्यते, लक्षणाव्यञ्जने च तस्यामेव अन्तर्भूते जायेते। अत्र अभिधायाः चतुर्भेदाः, षड्भेदाः लक्षणायाः चाभिधान्तर्गतम् एव परिगणिताः सन्ति। तथा व्यञ्जनावृत्तिः तु लक्षणायामेव समाहिता भवति। मुकुलभट्टानुसारं वाक्तत्वं (अभिधा) एव दशधा विवर्तयति। अत अभिधा एव सर्वप्रधाना वृत्ति अस्तीति। आचार्यमुकुलभट्टः अभिधा शब्दस्य प्रयोगं न केवलं शब्दशक्तेः कृते विदधाति, अपितु अभिधानशब्दव्यापार-सामान्यमात्राय करोति।

यस्यार्थस्य प्रतीतिः अभिधाव्यापारेण भवति, स मुख्यार्थः वाच्यार्थो वा उच्यते। अपरञ्च यस्य प्रतीति अर्थावबोधानन्तरे भवति स लक्ष्यमाणार्थेत्यभिधीयते। मुख्यार्थस्य (अभिधायाः) जाति, गुण, क्रिया, यदृच्छारूपाः चतुर्भेदाः भवन्ति। अत्र प्रामाणिकरुपो महाभाष्यकारः पतञ्जलिः। महाभाष्ये उक्तं यत् "चतुष्टयी शब्दानां प्रवृत्तिः"। शब्दस्य अन्याः शक्तयः अभिधाव्यापारेणबोधनानन्तरे एव अर्थावबोधने समर्थाः भवन्ति। अत एव अभिधा अग्रिमा, प्रथमा, मुख्या, संकेतिता च इत्यभिधान-रूपेणाऽपि प्रसिद्धाऽस्ति।

मुकुलभट्ट मते लक्षणाभेदाः-सर्वप्रथमं लक्षणायाः शुद्धा-उपचारमिश्रा च भेदद्वयं कृतम्। तद्विषये उक्तम्-

**'शुद्धोपचारमिश्रत्वाल्लक्षणा द्विविधा मता'।**[1]

शुद्धा यथा-गंगायां घोषः।

अपरञ्च यत्र वस्त्वनन्तरं-वस्त्वनन्तरे उपचर्यते, सा उपचारमिश्रा। यथा-'गौर्वाहीकः'।

1. अभिधावृत्तमातृका कारिका 2

अत्र शब्दः वाच्यार्थाद् भिन्नार्थे उपचर्यते।

अथ च शुद्धाया द्वैविध्यम्–'उपादानल्लक्षणाच्च शुद्धा सा द्विविधोदिता'।[1]

1. उपादानलक्षणा– यत्र स्वसिद्ध्यर्थतया वस्त्वन्तरस्याक्षेपो भवति, सा उपादान लक्षणा भवति। इयमेव अजहत्स्वार्था इति नाम्नाऽपि प्रसिद्धा। यथा–'गौरनुबन्ध्यः', 'पीनो देवदत्तो दिवा न भुङ्क्ते'।

2. लक्षणलक्षणा–यत्र स्वार्थसिद्ध्यर्थतया अर्थान्तरस्य आक्षेपोऽपि अर्थान्तरसिद्धि-साधनाय स्वार्थसमर्पणं भवति, सा लक्षणलक्षणा जहत्स्वार्था इति नाम्ना प्रसिद्धा।

यथा– गंगायां घोषः।

सम्प्रति उपचारमिश्रां लक्षणां चतुर्भेदत्वेन निरूपयति मुकुलभट्टः–

**आरोपाध्यवसानाभ्यां शुद्धगौणोपचारयोः।**
**प्रत्येकं भिद्यमानत्वादुपचारश्चतुर्भिदः॥**[2]

मुकुलभट्टमते उपचारो द्विविधः भवति–

1. शुद्धः उपचारः– यत्र मूलभूतस्योपमान–उपमेयस्याभावेन उपमानगतगुणसदृश-गुणयोगलक्षणासंभवात् कार्यकारणभावादिसम्बन्धात् लक्षणया वस्त्वन्तरे वस्त्वन्तरमुपचर्यते, तत्र शुद्धोपचार भवति। यथा–आयुर्घृतम्, गौर्वाहीकः।

2. गौणः उपचारः–अत्र तु मूलभूतोपमानोपमेयभावसमाश्रयेण उपमानगतगुणसदृश-गुणयोगलक्षणां पुरस्सरीकृत्योपमेये उपमानशब्दस्तदर्थश्चाध्यारोप्यते।

गुणेभ्य आगतत्वाद् गौणीशब्देनाभिधीयते। यथा–गौर्वाहीकः।

अग्रे च उभयोः शुद्धगौणौपचारयो अध्यारोपाध्यवसानाभ्यां चतुर्भेदाः जायन्ते।

1. अध्यारोपः–यत्र अध्यारोप्यारोपविषययोर्भेदम् अनपह्नुत्यैव वस्त्वन्तरे वस्त्वन्तरमुपचर्यते, तत्र अनपह्नुतस्वरूप एव वस्त्वन्तरे वस्त्वन्तरस्याधिकस्य आरोप्यमाणत्वाद् अध्यारोपः भवति। रूपकालङ्कारस्य बीजं विद्यते अत्र।

यथा– आयुर्घृतम्, गौर्वाहीकः।

2. अध्यवसानम्– यत्र च उपचर्यमाणविषयस्योपचर्यमाणेऽन्तर्लीनतया विवक्षि-तत्वाद् स्वरूपापह्नवः क्रियते, तत्र अध्यवसानम्। अतिशयोक्ति अलङ्कार अत्र दृग्गोचरी भवति।

यथा–पञ्चालाः, राजा गच्छति।

मुकुलभट्टमतानुसारं लक्षणाभेदान् एवं वर्णयितुं शक्यते–

---

1. अभिधावृत्तमातृका कारिका 3
2. अभिधावृत्तमातृका का. 4




इत्थं मुकुलभट्टः वर्णयति यत् ' एषा लक्षणा त्रिस्कन्धा शुद्धत्वाद्-अध्यारोपादध्यावसानाच्च। तत्र शुद्धस्कन्धस्य द्वैविध्यमुपादानलक्षणलक्षणाभ्यामुक्तम्। अध्यारोपाध्यवसानस्कन्धयोरपि प्रत्येकं द्विप्रभेदता शुद्धगौणोपचारमिश्रत्वात्।

**मम्मटमते लक्षणाविभागम्-**

**भेदवर्णनम्-** **स्वसिद्धये पराक्षेपः परार्थं स्वसमर्पणम्।**
**उपादानं लक्षणं चेत्युक्ता शुद्धैव सा द्विधा।।**[1]

लक्षणाया उपरोक्त भेदद्वयं शुद्धान्तर्गते एव, न तु गौणीलक्षणायाम्।

1. उपादानलक्षणा-अत्र स्वाभीष्टसिद्धये परार्थस्य ग्रहणं क्रियते। इयमेव 'अजहत्स्वार्था ' इति नाम्ना प्रसिद्धाऽस्ति। यथा-कुन्ताः प्रविशन्ति, यष्टयः प्रविशन्ति।

2. लक्षणलक्षणा-अत्र स्वाभीष्टसिद्धये स्वार्थस्यैव समर्पणं क्रियते, अन्यार्थमेव आगच्छति। इयमेव 'जहत्स्वार्था' इति नाम्ना ख्याताऽस्ति। यथा-गंगायां घोषः।

अनन्तरं सारोपा-साध्यवसाना वर्ण्यते-

**सारोपान्या तु यत्रोक्तौ विषयी विषयस्तथा।**
**विषय्यन्तःकृतेऽन्यस्मिन् सा स्यात् साध्यवसानिका।।**[2]

अत्र सारोपा-साध्यवसानाभ्यां गौणीशुद्धालक्षणायाश्च चतुर्भेदाः विहिताः।

1. सारोपा-अत्र विषयीविषययोः(उपमानोपमेययोः) स्पष्टकथनं भवति, न तु कस्यचित् निगीर्णम्। यथा-1. गौणी सारोपा-'गौर्वाहीकः', 2. शुद्धा सारोपा-'आयुर्घृतम्'।

2. साध्यवसाना-अत्र तु कथनोपरि अत्यधिकबलप्रदानाय विषयिणा (उपमानेन) विषयस्य (उपमेयस्य) निगीर्णं लोपं वा क्रियते। यथा-(1) गौणी साध्यवसाना-गौरयम्।

1. काव्यप्रकाश 2.10
2. काव्यप्रकाश 2.11

(2) शुद्धा साध्यवसाना-आयुरेवेदम्।

**अन्ते च- भेदाविमौ च सादृश्यात् सम्बन्धान्तरस्तथा।**
**गौणौ शुद्धौ च विज्ञेयौ।।**

1. गौणी- सादृश्यसम्बन्धे गुणयोगाच्च गौणी लक्षणा भवति। सा तु उपचारमिश्रा भवति।

2. शुद्धा- सादृश्येतरसम्बन्धेषु (कार्यकारणादिषु ) गुणरहिता शुद्धालक्षणा भवति। सा उपचाररहिता भवति। उपचारशब्दस्य लक्षणम् आचार्यविश्वनाथेन प्रदत्तम्- "उपचारो हि नाम अत्यन्तविशकलितयोः पदार्थयोः सादृश्यातिशयमहिम्ना-भेदप्रतीतिस्थगनमात्रम्"।[1]

आचार्यमम्मटमतानुसारं लक्षणा तेन षड्विधा इति कथनमेवं प्रदर्शयितुं शक्यते-




इत्थं या लक्षणा आचार्यमम्मटेन षड्विधा स्वीकृता तस्याः मूलाधार आचार्यमुकुलभट्टस्य मतमेव पूर्वगामी वर्तते किन्तु तत्र केवलम्-अस्तीत्यस्य अभिश्वा एव एका वृत्तिः स्वीकृता अस्ति इत्यस्य न केनापि समर्थनं क्रियते तस्मादेव मतमिदं मुख्यधारायां न विचार्यते, समाद्रियते च।

उभयो ग्रन्थयो आधारेण निम्नांकितबिन्दवः समालोचनीयाः वर्तन्ते-

1. लक्षणाविभागः सर्वप्रथमः आचार्यमुकुलभट्टेन व्यवस्थितः, तस्याः लक्षणं च प्रदत्तम्।
2. आचार्यमम्मटः शब्दस्य त्रैविध्यं स्वीकरोति-वाचकः, लक्षकः, व्यञ्जकश्च किन्तु मुकुलभट्टः शब्दस्य वाचकभेदमेव स्वीकरोति, लक्षकव्यञ्जकौ तु तस्यान्तर्गतौ एव अर्थस्य भेदौ स्तः।

---

1. साहित्यदर्पण, परि, 2, पृ. 67

3. आचार्यमम्मटस्य लक्षणाविभागस्य मुकुलभट्टस्य 'अभिधावृत्तमातृका' इति ग्रन्थः मूलाधारः वर्तते।

4. मुकुलभट्टानुसारम्- अविधा एव सर्वप्रधाना वृत्तिरस्ति, लक्षणा-व्यञ्जना तु तस्यामेव समाहिता किन्तु साहित्याचार्यमम्मटस्य मते तु अभिधा-लक्षणा-व्यञ्जना वृत्तित्रयमेव उत्तरोत्तरा श्रेष्ठा, प्रधानरूपा च। अभिधा च सर्वाधारा,सर्वमूलरूपा चास्ति।

5. साहित्यदृष्टया आचार्यमम्मटः मुकुलभट्टस्य 'गौरनुबन्ध्यः', 'पीनो देवदत्तो दिवा न भुङ्क्ते' लक्षणोदाहरणयोः खण्डनं करोति तत्तु तर्कसंगतमेव।

6. मम्मटस्य लक्षणाविभागः अस्पष्टं प्रतीयते। तत्र क्रमिकताया अभावो विद्यते। किन्तु व्यावहारिकदृष्ट्या सुगमोऽस्ति।

7. लक्षणलक्षणाया उदाहरणे (गंगायां घोषः) इत्यत्र अतिव्याप्तिदोषस्य शंका भवति।

8. 'गंगायां घोषः' इत्यत्र मुकुलभट्टः ताटस्थ्यसिद्धान्तं स्वीकरोति, किन्तु मम्मटस्तु तत्र अभेदप्रतीतिसम्बन्धं स्वीकरोति, शीतलता-पावनतादि प्रतीतिप्रयोजनाय।

9. आचार्यमम्मट उपचारं शुद्धागौण्योर्भेदकधर्मः स्वीकरोति किन्तु मुकुलभट्टमते उपचारस्य मिश्रणमुभयो एव वर्तते।

10. आचार्यमम्मटस्य लक्षणाविवचने ध्वनिपुनर्स्थापनस्य उद्देश्यो अन्तर्निहितोऽस्ति। तस्मादेव आचार्यमम्मटः 'ध्वनिप्रस्थापकाचार्यः' इत्युपाधिना समलंकृतः। किन्तु मुकुलभट्टस्तु ध्वनिं व्यञ्जनां वा लक्षणायामेव अन्तर्लोपं विदधाति।

इत्थं लक्षणायाः स्वरूपं विभागं च सुस्पष्टं जायते यत् साहित्यशास्त्रे अतिमहत्त्वपूर्णा शब्दशक्तिः वर्तते यस्याः सुप्रयोगः साहित्ये सौन्दर्यं वैदग्ध्यं च वर्धापयन् सहृदयजनान् रञ्जयति। आचार्यः मुकुलभट्टः मम्मटश्च लक्षणायाः विकासे, सुव्यवस्थितविभागे च महत्त्वपूर्णं योगदानं प्रददतुः। यमाधारीकृत्य लक्षणाविभागं सरलतया अवगन्तुं शक्यते।

## सन्दर्भग्रन्थसूची

1. अभिधावृत्तमातृका-मुकुलभट्ट, सम्पादक एवं व्याख्याकार-डॉ. ब्रह्ममित्र अवस्थी एवं सुश्री इन्दु अवस्थी, प्रकाशक-इन्दु प्रकाशन, रूपनगर (दिल्ली)

2. काव्यप्रकाश-आचार्य मम्मट, व्याख्याकार-आचार्य विश्वेश्वर सिद्धान्तशिरोमणि, सम्पादक-डॉ. नरेन्द्र, प्रकाशक-वाराणसी, ज्ञानमण्डल लिमिटेड

3. काव्यप्रकाश-मम्मट, व्याख्याकार एवं सम्पादक- डॉ. श्रीनिवासशास्त्री प्रकाशक-साहित्य भण्डार, सुभाष बाजार, मेरठ
4. व्यक्तिविवेक-महिमभट्ट, रुय्यकव्याख्यासहित, मधुसूदनी व्याख्याकार पं. मधुसूदन मिश्र, प्रकाशक-जयकृष्णदास, हरिदास गुप्त, चौखम्बा संस्कृत सीरीज, वाराणसी 1986
5. भारतीय आलोचना-शास्त्र-डॉ. राजवंश सहाय हीरा, प्रकाशक-बिहार हिन्दी ग्रन्थ अकादमी पटना, 2003
6. संस्कृत वाङ्मय का बृहद् इतिहास, अष्टम खण्ड-काव्यशास्त्र, मुख्य सम्पादक-आचार्य बलदेव उपाध्याय, प्रकाशक-उत्तर प्रदेश संस्कृत संस्थान, लखनऊ, प्रथम संस्करण 2001
7. संस्कृत व्याकरणदर्शन-रामसुरेश त्रिपाठी, प्रकाशक-राजकमल प्रकाशन दिल्ली-6




# श्रीकृष्णजोशिविरचिते परशुरामचरितनाटके वस्तुतत्त्वानां विवेचनम्

**डॉ. रेणू वत्स***

श्रीकृष्णजोशिमहोदयानां जन्म शाके 1805 पौषशुक्लायां सप्तम्यां गुरुवासरे पूर्वाभाद्रपदनक्षत्रे हिमालयस्य कुक्ष्यन्तर्गतोत्तराखण्डप्रान्तस्य कूर्मांचले अल्मोडानगर्याः चीनाखाननामके स्वपैतृकसदने अभवत्। जोशिमहाभागेन अनेके ग्रन्थाः प्रणीताः परन्तु प्रकाशिताः ग्रन्थास्तु न्यूना एव। केषाञ्चित् अप्रकाशितग्रन्थानां पाण्डुलिपयः तस्य आवासे सुरक्षिताः सन्ति। एताः पाण्डुलिपयः संस्कृत-हिन्दी-अंग्रेजी-कुमाऊँनीभाषासु रचिताः सन्ति।

श्रीकृष्णजोशिमहोदयेन नाटकत्रयं लिखितम्- यमराजपराजयम्, परशुराम-चरितम्, श्रीकृतार्थकौशिकञ्च। परशुरामस्य चरितस्य वर्णनं यत्र कृतम् वर्त्तते तन्नामकं नाटकं परशुरामचरितम्। नाटकेऽस्मिन् सहस्रबाहुवधं मुख्यमुद्देश्यम् वर्त्तते। नाटकस्यान्ते च उद्देश्यपूर्तिः अपि दृश्यते। परशुरामचरितनाटके नाट्यशास्त्रीय, काव्यशास्त्रीय तथा वस्तुतत्त्वानां विवेचनं वर्तते। तेषु वस्तुतत्त्वानाम् अग्रे विवेच्यते।

**पूर्वरङ्गः** - पूर्वरङ्गो नाम नाट्यपूर्वे विघ्नोपशान्तये करणीयं मङ्गलाचरणम्। पूर्वरङ्गः रङ्गमञ्चे नाटकस्यारम्भे सङ्गीतयोजनेन् भवति। पूर्वरङ्गे विघ्नोपशान्तये नान्दी क्रियते।

विश्वनाथेनोक्तम्-

**यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये।**
**कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते॥**[1]

नान्दी- नन्दन्ति देवा यस्मानथवा आनन्दयति देवादीन् स्तुत्या इति नान्दी।

**प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि।**
**तथाऽप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये॥**
**आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।**
**देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता।**[2]

---

* सहायक आचार्य, दीवानकृष्ण किशोर सनातन धर्म आदर्श संस्कृत कॉलेज, अम्बाला छावनी, हरियाणा।

1. सा.द. 6/22
2. तत्रैव, 6/24

**माङ्गल्यशङ्ख चन्द्राब्जकोक कैरवशंसिनी।**
**पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत॥**[1]

परशुरामचरिते नान्दी यथा-

**मनीषा सिद्धिदा यस्य प्रसिद्धा लोकवेदयोः।**
**श्रीदं तं श्रेयसे वन्दे सेन्दुं भास्वत्परश्वधम्॥**[2]

अष्टपदा द्वादशपदा च नान्दी कथिता कविराज विश्वनाथेन। अत्र चतुष्पदा पत्रावलीया कृता नान्दी वर्तते यतोहि अत्र श्लेषेण समासोक्त्या वा नाटके सपत्नीकपरशुधरस्य भगवदवतारस्य परशुरामस्य वन्दना कृता। नान्दीपाठकः कश्चिन्नटो सूत्रधारो वा भवितुं शक्नोति। सूत्रधारो नान्द्यन्ते अलमतिविस्तरेण इति वदति। अतएव अत्र नान्दीपाठकः सूत्रधारो इति मन्ये। सूत्रधारो नटश्च (भरतः) स्वसम्वादे प्रस्तावनायां तौ नाटकनाटकाराभ्यां सह नायकमपि इङ्गितवन्तौ। नाटकस्य विशिष्टगुणैस्सह सूत्रधारो रचयितुर्वैदुष्यमपि परिचिनोति। सः विद्याभूषणश्रीकृष्णकविना महन्नैपुण्येन विरचितं परशुरामचरितसम्बद्धं नाटकम् रङ्गशालायां भरतं प्रयोजयितुमादिशति। नाट्यसूचकत्वात् प्रस्तावना आमुखमिति कथ्यते। नाटकमिदं प्रातः स्मरणीयस्य पुण्यश्लोकस्य परमपुरुषावतारस्य परशुरामस्य पवित्रं चरित्रोदाहरणं चतुवर्गसाधनं दुरितबाधनमच्युताराधनञ्च निगदितम्। अत्र परशुरामं सहस्त्रबाहुञ्चाधिकृत्य अन्यार्थक-वचनेन अन्यत् कार्यं सिध्यति। अन्यकार्यावगलनादवगलितं ज्ञेयम्। अत्र प्रस्तावनाया अवगलितनामको भेदोऽस्ति।

**अवगलितम्-**

**यत्रान्यस्मिन् समावेश्य कार्यमन्यत् प्रसाध्यते।**
**तच्चावगलितं नाम विज्ञेयं नाट्ययोक्तृभिः॥**[3]

अत्र रङ्गमञ्चे परशुरामस्यागमनं सूचयन् भरतः सूत्रधारं कथयति-**अतस्तस्मै दूरात् प्रणम्य गच्छावः।** सः सूत्रधारेण सह रङ्गमञ्चात् निर्गच्छति। तदनन्तरं परशुरामस्य भ्रातृणां प्रवेशः भवति।

नाटकस्य रचनायै कथावस्तु इतिवृत्तं वा प्रमुखं तत्त्वं भवति। नाटके पात्राणां प्रामुख्यम् अनन्तरम् स्थितिस्सत एकोऽङ्गिरसः अन्ये च गौणरसाः भवन्ति। एवं वस्तु नेता रसश्चेति नाटकरचनायाः प्रमुखतत्त्वानि भवन्ति। पाश्चात्यविदुषां मते षट्तत्त्वानि भवन्ति यथा- कथानकं चरित्रचित्रणं कथोपकथनं सम्वादो वा देशकालौ

---

1. तत्रैव, 6/25
2. परशु. पाण्डुलिपि 1/1
3. ना.शा. 8/116

रचनाशैली उद्देश्यञ्च। तेषां षण्णामन्तर्भावः त्रिष्वेव तत्त्वेषु भवितुमर्हति। नाट्यप्रदर्शनात् पूर्वं मञ्चे दर्शकानाम् आनन्दाय पूर्वरङ्गस्यावश्यकता भवति। अभिनयदृष्ट्या नाटके वृत्तीनामपि महत्त्वपूर्णं स्थानं भवति। अतः नाटके प्रकारान्तरेण पञ्चमुख्यतत्त्वानि गण्यन्ते यथा पूर्वरङ्गः, कथावस्तु, अभिनेता, रसो वृत्तसश्चेति।

अत्र नाटककारेण स्वकल्पनया नाटकीयदृष्ट्या च यत्र तत्र कथानके परिवर्तनपुरस्सरं परिवर्द्धनमपि कृतम्। कथानकमिदं मिश्रितं कथ्यते। वस्तु द्विविधमिति भवति- अधिकारिकं प्रासङ्गिकञ्च।[1]

परशुरामचरितनाटके दुराचारिसहस्रबाहुं हत्वा आर्यकुलेषु चैक्यस्थापनं प्रधानफलम् भवति। तत् प्रधानफलं प्राप्तिपर्यन्तं क्रियमाणं कर्ममाधिकारिकम् इत्युच्यते। नाटकेऽस्मिन् भद्रसेनेतिवृत्तं प्रासङ्गिकं मन्यते।

**अर्थप्रकृतयः-**

भरतमुनिना नाट्यशास्त्रे पञ्चार्थप्रकृतीनां योजनार्थं निगदितम्-

**बीजं बिन्दुः पताका च प्रकरी कार्यमेव च।**
**अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि।।**[2]

एतेषां अर्थप्रकृतीनां सामान्यपरिचयं यथा-

बीजम्- नाटके यत् मुख्यफलं तत् सिद्धिहेतोः बीजं धान्यबीजवत् सूक्ष्मं वृद्धिशीलं च कथ्यते।

यथा-

**इह बहुविटपः सहस्रबाहुर्द्विजकुलदुःखकरः सकण्टकोऽग्रे।**
**स पततु परशोः प्रचण्डघातैः फलरहितोऽपि समूललूनशाखः।।**[3]

परशुरामचरितनाटकस्य प्रथमाङ्के परशुरामद्वारा सहस्रबाहुवधं हि मुख्यं कार्यम्। बहुशाखावतो वृक्षस्यार्थे सहस्रबाहुशब्दो प्रयुक्तः। नाटकस्यान्ते च सहस्रबाहोः वधप्रयोजनं पूर्णतां याति। अत्र इतिवृत्तं सहस्रबाहुर्वधार्थं सङ्गच्छते।

**बिन्दुः-** मुख्यवृत्ते विच्छिन्ने जाते यत्र यत् स्मृतिपथमेति तत्र बिन्दुः अस्ति। जल तैलबिन्दुरिव बिन्दुः कथानकं प्राप्नोति। नाटकस्य तृतीयाङ्कमध्यादारभ्य चतुर्थाङ्कमध्यं यावदनावृष्टिनिवारणार्थं परशुरामद्वारा यज्ञादिसम्पादने मुख्यवृत्तं विच्छिन्नं जातम्। भद्रसेनः परशुराममपृच्छत् किं दिव्यास्त्रैः सहस्रबाहुयुद्धं प्रशमितुं शक्यते? परशुरामस्य

1. सा.द. 6/42
2. ना.शा., 19/21
3. परशु. - 1/10

प्रत्युत्तरेण (परस्परयुद्धेन तयोः शक्तिहानिर्लोककल्याणाय भवेत्) पुनरत्र मुख्यवृत्तं स्मृतिपथं प्राप्नोति। अतोऽत्र बिन्दुनामिका अर्थप्रकृतिः भवति।

**पताका–**

**तद् वृत्तं दूरगामि तथा फलप्राप्तौ सहायकम्।**[1]

भद्रसेनः सहस्रबाहुं हन्तुं क्षत्रियनरेशानं संगठने प्रयतते। एतद्वृत्तान्तं नाटकस्य तृतीयाङ्कात् षष्ठाङ्कस्य मध्यं यावत् प्रचलति। भद्रसेनः पताकानायकोऽस्ति।

**प्रकरी – प्रासङ्गिकं प्रदेशस्य चरितं प्रकरीमता।**[2]

नाटकेऽस्मिन् प्रकरीनामिकया अर्थप्रकृत्या सर्वथाऽभावो वर्त्तते।

**कार्यम् – समापनं तु यत्सिद्ध्यैतत्कार्यमिति सम्मतम्।**[3]

परशुरामचरितनाटके सहस्रबाहुवधरूपस्य कार्यस्य सिद्धिहेतोः नायकः कार्याणि प्रारब्धवान्। तत् फलप्राप्त्यर्थं कृत्यं नावशिष्यते तत् कार्यम्। अत्र सहस्राबाहुं निहत्य क्षत्रियनरेशानां संगठनं कार्यमिति।

फलार्थिभिः प्रारब्धस्य कार्यस्यैताः पञ्च अवस्थाः आरम्भः, प्रयत्नः, प्राप्त्याशा, नियताप्तिः फलागमश्च भवन्ति।

**आरम्भः प्रयत्नः प्राप्त्याशा नियताप्तिफलागमाः॥**[4]

**परशुरामचरिते कार्यावस्था–**

**आरम्भः–**

**औत्सुक्यमात्रमारम्भः फललाभाय भूयसे।**[5]

अर्थात् फलप्राप्त्यर्थं यत् औत्सुक्यं भवति तदेवारम्भः इति विद्वभिः मन्यन्ते।

परशुरामचरिते आरम्भः यथा–

**पवित्रेऽस्मिन्देशे द्विजकुलहिते दस्युरहिते**
**महाराजो भ्राजन्मणिजटितसौवर्णमुकुटः।**
**करोत्याचारं यदि जगति कुत्रापि तमहं**
**कुठारस्याघातैर्झटितिः कलये कालकवलम्॥**[6]

---

1. सा.द. 6/67
2. तत्रैव 6/68
3. तत्रैव 6/69
4. दशरूपकम् 1/19, सा.द. 6/71
5. तत्रैव 1/20
6. परशु. 1/16

अत्र कुठारेण यं कमप्यत्याचारिणं हन्तुं इच्छया अत्याचारिणो विनाशाय (फलप्राप्त्यर्थम्) परशुरामस्य औत्सुक्यमात्रमेव अवगम्यते।

**2. प्रयत्नः – फलप्राप्तौ अतिशीघ्रतया क्रियमाणो व्यापारः प्रयत्नः वर्त्तते।**

परशुरामचरिते प्रयत्नः–

**सन्निधाने तु कस्यापि पुरुषत्वभिमानिनः।**
**जीवतो जातु दुष्कर्मा हर्त्तुमीष्टेऽबलां बलात्।।**[1]

अत्र परशुरामस्य कथने दुराचारिणं सहस्रबाहुं हन्तुं त्वरान्वितायाः भावः आगच्छति। अतोऽत्र प्रयत्ननाम्नः कार्यावस्थास्ति।

**3. प्राप्त्याशा**– अस्यामवस्थायाम् उपाये विघ्नशंकया च फलप्राप्तिः दोलायमाना जायते। यथा– एकत्र परशुरामेण शार्यातादयो हताः। जनैः परशुरामलोमहर्षिन्या सह भद्रसेनस्य कुलाधिपत्यं अभिनन्दनं कृतम्। एकतः सहस्रबाहुः रावणेन सह युद्धरतो वर्त्तते अपरतश्च सहस्रबाहुः युद्धे विजयं लब्ध्वा प्रत्यागच्छेत् तर्हि सहस्रबाहुः प्रकुप्य परशुरामभद्रसेनौ च वधं करिष्यति। लोमहर्षिणीमपि पीडयिष्यतीत्याशंकाऽपि बाधते। अतः अत्र प्राप्त्याशा वर्तते।

**4. नियताप्तिः**– यत्र विघ्नाभावेन फलप्राप्तिः सुनिश्चिता भवति तत्र नियताप्तिः भवति। यथा– नाटकस्य दशमाङ्के परशुरामसहस्रबाहुसंग्रामे सहस्रबाहुसेना विनष्टाः तथापि यदा सहस्रबाहुः एकाकी परशुरामेण सह युद्धमानो वर्त्तते तदा परशुरामेण तस्य वधं निश्चितम् भवति।

**5. फलागमः**– फलागमे समस्तफलप्राप्त्यनन्तरं फलप्राप्तिः सुनिश्चिता भवति। यथा नाटकस्यान्तिमेऽङ्के परशुरामकथने–

**जयोऽस्ति यो मे स तवाशिषां फलम्।**
**यशश्च यन्मे तदपि त्वदाशिषा।**
**पितुर्महर्षेरपि जीवरक्षणं**
**त्वदीयसेवाफलमस्ति केवलम्।।**[2]

अत्र परशुरामः अत्याचारिणं सहस्रबाहुवधरूपम् अभीष्टफलं प्राप्नोति। अतः फलागमः अस्ति। नाटककारेण अस्मिन् नाटके यथाऽर्थप्रकृत्यः कार्यावस्थाश्च सम्गुम्फिताः सन्ति तथैव एतासां समन्वयेन पञ्च सन्धयोऽपि (मुख–प्रतिमुख–गर्भ–विमर्श–निर्वहणाः) संयोजिताः सुकौशलेन।

---

1. परशु. 3/18
2. परशु. 10/46

**परशुरामचरिते अर्थोपक्षेपकाः-**

कथावस्तुनो अर्थस्य उपक्षेपकाः सूचकाः अर्थोपक्षेपकाः कथ्यन्ते। नाटकस्याङ्केषु सरस इतिवृत्तस्योपनिबन्धनं भवति किन्तु कस्यचन नीरसस्य निबन्धनीयस्यापि वस्तुनो योजना गुम्फिता जायते या पूर्वापरेतिवृत्तदृष्ट्या अपेक्षितैव भवति। वस्तुतः दृश्यकाव्यस्याभिनय रङ्गमञ्चे भवति। तद्दृष्ट्यैव काव्यस्य दृश्यश्रव्यविभाजनं भवति। रङ्गमञ्चे कस्याऽपि घटनायाः प्रदर्शनं अरुचिकरत्वात् अनुचितं मन्यते। कथासूत्रं द्विविधं भवति दृश्यं सूच्यञ्च। कथानकस्य येऽशाः नीरसाः भवति येषां मञ्चे प्रदर्शनं अनुचितं मन्यते ते सूच्याः कथ्यन्ते। ये मधुरोदात्तरसभावसम्पृक्ताः सन्ति अपि च रङ्गशालायां येषां प्रदर्शनं दर्शकानां कृते रसमय भवेत् ते दृश्याः। सूच्यं कथावस्तु अर्थोपक्षेपकैर्ज्ञायते। ते च पञ्चधा भवन्ति- विष्कम्भकः प्रवेशकः चूलिका अङ्कावतारोऽङ्कमुखश्च।[1] नाटकेऽस्मिन् एषु पञ्चसुविष्कम्भकश्चूलिका चैतद् द्वयमेवोदाहृतम्।

**1. विष्कम्भकः** - अनुसन्धानेन विष्कभ्नाति वृत्तमुपष्टम्भयतीति विष्कम्भकः भवति।[2] विष्कम्भकमाध्यमेन नाटके भूतभाविकथांशाः सूच्यन्ते। सो च अङ्कसन्धायको वर्त्तते अर्थात् द्वयोरङ्कयोः सम्बन्धकारको मन्यते। अङ्कस्य आरम्भादेव अस्य संयोजनम् जातम्। विश्वनाथेनाऽपि उक्तम्-

**वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः।**[3]

परशुरामचरितनाटके चतुर्णामङ्कानामारम्भे द्वयोः पात्रयोः संवादेषु मात्र भाषादृष्ट्या शुद्धविष्कम्भको दृश्यते।

**2. चूलिका**- नाटकेऽस्मिन् जवनिकायाः अभ्यन्तरैः स्थितैः पात्रैः यत् इतिवृत्तं सूच्यते तदेव चूलिका भवति। उक्तञ्च-

**अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका।**[4]

*अरे रे कोऽयं संसारे योऽस्माकं महाराजस्य सहस्रबाहोरनिष्टं जल्पति।*[5] अत्र पत्रद्वारा नेपथ्ये ससेनस्य सहस्राबाहोः सहायकाः सबलाः सन्तीति सूच्यते।

भो देवाः त्वरध्वम्। त्वरध्वम्। इत्यादिना देवा पुष्पवृष्ट्यर्थं सम्बोधिताः। अत्र परशुरामः सहस्रबाहुविनाशे सफलो जातः, इति दशमाङ्के नेपथ्योल्लेखेन सूचितम्। एतादृशानि बहूनि उदाहरणानि नाटके प्राप्यन्ते।

---

1. सा.द. 6/54
2. परशु, पृ. 39
3. सा.द. 6/55
4. तत्रैव 6/58
5. परशु. प्रथमाङ्क श्लोक 16-17, पृ. 87

**परशुरामचरिते नाट्योक्तिनिरूपणम्**

नाटके श्रव्याश्राव्यदृष्ट्या कथानकस्य वृत्तभेदा नाटकीयसङ्केतरूपेण भवन्ति। अश्राव्यं स्वगतमपि उच्यते।

**स्वगतम्**- यदन्येषां गोप्यतया पात्रस्य स्वहृद्येव स्थितं तत् स्वगतमात्मगतश्राव्यं भवति। विश्वनाथेन नाट्योक्तिस्वरूपम् यथोक्तम्-

अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्। स्वगतमपि दर्शकानां कृते तु श्राव्यमेव भवति परन्तु मञ्चस्थपात्राणां कृते अश्राव्यमेव भवति। स्वगतं द्विविधं भवति- अपवारितं जनान्तिकञ्च।

**अपवारितम्**- अपवारितमिति रहस्यकथनमित्यर्थः। नाटके केवलमेकद्विवारमेव रहस्यं कथ्यतेऽन्यस्य परावृत्यापवारितम्।[1]

**जनान्तिकम्**- नाट्योक्त्याः प्रकारमेकं जनान्तिकम्। त्रिपताकाकारेण अन्यान् गोप्य कथानकस्य मध्ये एव पात्रद्वयोः परस्परं संवादं जनान्तिकम् इत्युच्यते।

**रहस्यन्तु पदन्यस्य परावृत्य प्रकाश्यते।**
**त्रिपताककरेणान्यानपवार्यान्तरा कथाम्।।**[2]

नाटकेऽस्मिन् जनान्तिक आकाशभाषितयोः प्रयोगाभावः वर्त्तते।

**वर्णनकौशलम्**- कस्यापि वस्तुनोः रूपाकारप्रकारादीनां वाङ्मयी यथार्थाभिव्यक्तिरेव वर्णनम् भवति। तस्य रूपस्य रम्याभिव्यक्तिरूपं एव वर्णनकौशलं कथ्यते। तच्च द्विविधम् भवति- प्राकृतिकवर्णनं वैकृतिकवर्णनञ्च। अस्मिन् परशुरामचरितनाटके प्राकृतिकवर्णने पर्वतः नदी वनं, वनस्पतिः, प्रपातसूर्यचन्द्रवन्यजीवाः, अतिवृष्टिः, अनावृष्टिः, दावाग्निः, गिरिः प्रातः, मध्याह्नं, सायं, दिवसं रात्रि ऋत्वादीनां वर्णनमुपलभ्यते।

वैकृतिकवर्णने च युद्धं, दुर्गः, राजधानी इत्यादीनां वर्णनमपि दृश्यते। मानवीय-सौन्दर्ये परशुरामस्य रूपाकारवर्णनेन सह लोमहर्षिण्याः मृगायाश्च रूपादिवर्णनञ्चास्ति। चरित्रचित्रणे पात्राणां रूपादिवर्णनं कृतम्।

निष्कर्षरूपेण वक्तुं शक्यते यत् विद्याभूषण उपाधिना विभूषितः श्रीकृष्णजोशी-महोदयानां कृत्तीनां माध्यमेनैव तेषां वैदुष्यं प्राकट्यते। नाटके प्रस्तावनायाः अवगलितनामको भेदोऽस्ति। अस्मिन् नाटके यथाऽर्थप्रकृत्यः कार्यावस्थाश्च सम्गुम्फिताः सन्ति तथैव एतासां समन्वयेन पञ्च सन्धयोऽपि (मुख-प्रतिमुख-गर्भ- विमर्श-निर्वहणाः) संयोजिताः सुकौशलेन। विष्कम्भकश्चूलिकाश्च अर्थोपक्षेपकाः स्वीकृतः।

1. नाटकीय पारिभाषिक शब्दावली, पृ. 71
2. तत्रैव, पृ. 72

**सन्दर्भग्रन्थाः-**

1. नाटकीय पारिभाषिक शब्दावली
2. दशरूपकम्
3. साहित्यदर्पणः
4. नाट्यशास्त्रम्
5. परशुरामचरितम्



संस्कृतविमर्शः ( जनवरी-जून 2022 ) अङ्कः-22 ISSN : 0975-1769

# स्वप्नवासवदत्तम्-प्रेम्णः नैतिकतायाः प्रतिफलनम्

पिन्टू वेरा*

**सारः**

प्रेम नाम किमपि कारणं विना तस्य स्मरणम्। अन्यं कमपि विषयं प्रति कमपि अभिलाषमकृत्वा पूतचरितः सन् आत्मनः समर्पणमेव नैतिकं प्रेम। प्रसङ्गेऽस्मिन् रामचन्द्रसीते समुल्लेखनीये। तत्र श्रीरामचन्द्रः अश्वमेधयज्ञकाले सीताया अनुपस्थितेः तस्याः सुवर्णमयीं मूर्तिं निर्ममे। अनेन रामस्य सीतां प्रति प्रेम नैतिकमासीदिति गम्यते। प्रसङ्गेऽस्मिन् वैष्णवानां नैतिकं प्रेम अपि दृष्टान्तभूतम्। तत्र सम्पूर्णमपि हृदयं व्याप्य कृष्णो विराजते। कृष्णभावनामृतान्दोलनं सम्पूर्णमपि विश्वमाकृष्टं कर्तुं समर्थम्। महाकविभासेन विरचितं स्वप्नवासवदत्तम् इति नाटकं प्रेममूलकं तथा प्रेम्णः नैतिकतायाः आलोकेन रचितम्। अन्यैः नाटकैः सह समालोचनाग्निना दग्धमपि नाटकमिदं सर्वथा अक्षय्यं वर्तते। उक्तं च-"स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः" इति। षष्ठाङ्कविशिष्टेऽस्मिन् नाटके नायकस्य वत्सराजस्य उदयनस्य अकृत्रिमं प्रेमैव परिस्फुरति। कथायाः प्रारम्भात् अन्तं यावत् उदयनस्य हृदये केवलं वासवदत्तैव राजते। यद्यपि राजनैतिकहेतोः सः अन्यां नायिकां पद्मावतीं परिणीतवान् तथापि प्रेम्णः नैतिकताहेतोः अन्यपतिरपि सः वासवदत्तां प्रति पूर्ववदेव प्रेमासक्तः आसीत्। वस्तुतस्तु राजा बह्वीः पत्नीः ग्रहीतुं शक्नोति। किन्तु प्रेम्णः नैतिकताहेतोः तस्य प्रेम सर्वदैव वीणावादिन्यां वासवदत्तायामेव निहितमासीत्।

**कूटशब्दाः**- प्रेम, प्रीतिः, प्रणयः, धर्मः, नैतिकता

**विषयप्रवेशः**

साहित्ये खलु रसानां समाहारो भवत्येव। नवरसानां समाहारेण साहित्यं सञ्जायते। तत्र क्वचित् शृङ्गारस्य प्राधान्यं क्वचित् वीरस्य क्वचिच्च करुणादेः।[1] तथापि शृङ्गारप्रधानानि काव्यान्येव आधिक्येन परिलक्ष्यन्ते। संस्कृतसाहित्ये श्रेष्ठकविषु अश्वघोषात् परमेव भासस्य स्थानं परिगण्यते। स एक एव अलङ्कारशास्त्रस्य

* सहायक अध्यापकः, पश्चिमबङ्गालः।

1. शृङ्गारहास्यकरुणरुद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च नवनाट्यरसाः स्मृताः।। -अभिनयदर्पणम्

नियमान् अविगणय्य स्वबुद्ध्या स्वकृतीः रचयामास। तथापि तस्य कृतिषु अनन्या गतिः परिलक्षिता भवति या परवर्तिनि काले कवीनामनुसार्या भवति। शृङ्गारवीर-रौद्रभयानकादयः सर्वेऽपि रसाः तस्य कृतिषु दरीदृश्यन्ते। तस्य नाटकेषु स्वप्नवासवदत्तं मुख्यम्।[1] नाटकस्य सर्वत्रापि उदाहर्तुं योग्यः शृङ्गाररसस्य सञ्चारो दृश्यते। सामान्यतया करूणरसस्य प्रादुर्भावो वर्तते चेदपि शृङ्गारस्य प्रभावेन स गौणीभवति।

शृङ्गारो नाम प्रेम यः सर्वमपि एकत्रीकरोति। स्वप्नवासवदत्ताख्ये नाटके नायकः उदयनः, नायिका वासवदत्ता, अपरा च नायिका पद्मावती। यौगन्धरायणः इत्यन्यदेकं मुख्यं चरित्रम्। प्रत्येकेषु प्रेम्णः नैतिकं प्रतिफलनं सुष्ठु परिलक्ष्यते। प्रेम नाम न केवलं कामुकानां प्रेम अत्रावश्यमेव कृष्णार्जुनयोः कृष्णराधिकयोः कृष्णगोपीनां च प्रेम अनुस्मर्तव्यम्। अत्र कृष्णेन सह अन्याः शक्तिस्वरूपाः प्रणयिनः शक्तिस्वरूपिण्यः प्रणयिन्यश्च। प्रकृते नाटकेऽपि उदयनः प्रधानः। अन्ये तस्य एकैकशक्तिस्वरूपाः ये तस्य सुरक्षायै सर्वदा व्याकुलिताः आसन्।

**उदयनयौगन्धरायणौ**

प्रेम न केवलं विरुद्धलिङ्गानां परस्परमाकर्षणात् भवति। नाटकेऽस्मिन् इदं द्रष्टुं शक्यते। द्वयोः सुहृदोः सुमधुरसम्बन्धेन राज्यस्य पुनरुद्धारः सञ्जातः अत्र। उदयनयौगन्धरायणयोर्मध्ये न केवलं राजमन्त्रिसम्बन्धो वर्तमानः आसीत्। तयोर्मध्ये आसीत् प्रगाढं भक्तिसम्मिश्रं प्रेम। राज्ञः आद्यं कर्तव्यं प्रेम्णा प्रजानां प्रतिपालनं यत् उदयने आसीत्। वासवदत्तायाः प्रेम्णि निपतितस्य तस्य किञ्चित्कालं स्वकर्तव्य-विस्मृतिर्जाता। तत्र प्रकृतसुहृद्रूपेण यौगन्धरायणस्य कर्तव्यं परममित्रस्य स्वकर्तव्यमार्गे आनयनम्। तस्मात् स मित्रवदेव परिकल्पनामकरोत् तथा उदयनं यथोचितं मार्गं प्रत्यानयत्।

वत्सराजस्य उदयनस्य कौशाम्बिराज्यं तद्रिपुणा आरुणिना अधिकृतम्। लावणके राजपरिवारेण सह प्रवासकाले स निरन्तरमिदमेव अचिन्तयत् यत् कथं तस्य प्रभोः उदयनस्य हृतराज्यस्य पुनरुद्धारः कर्तुं शक्यत इति। अयमेव परमो हितैषी यौगन्धरायणः पुष्पकभद्रादीनां दैवज्ञानां वाक्यानि विश्वस्य उदयनस्य पद्मावत्याः सह विवाहे सति मगधराजेन सह मित्रत्वस्य बन्धनं सुदृढं भविष्यतीति विचिन्त्य वासवदत्ताम् आत्मत्यागाय उद्बुद्धामकरोत्।

प्रभोः वत्सराजस्य राजसिंहासने पुनरारोहणं विहाय अन्यः कोऽपि अभिलाषस्तस्य नासीत्। तस्य कृते उज्जयिनीनृपेण महासेनप्रद्योतेन सह आत्मीयत्वाभिलाषः यावत्सिद्धस्तावत् मगधराजेन दर्शकेन सहापि आत्मीयतासम्बन्धः विधेयः। दैवज्ञस्य

1. स्वप्नवासवदत्तस्य दाहकोऽभून्न पावकः– राजशेखरः

भविष्यद्वाणी अन्यथा भवितुं नार्हति। मगधराजपुत्री पद्मावत्येव राज्ञ उदयनस्य महिषी भविता। दैवज्ञवाक्यं विफलं न गमिष्यतीति तस्य दृढविश्वासः। अतस्तस्य सर्वमपि परिकल्पनं व्यर्थं भवितुं नार्हति। तस्मात् लावाणके अग्निकाण्डं कारयित्वा वासवदत्ता मृता तथा तस्या उद्धारं कर्तुं गच्छन् सोऽपि मृतः इत्येतादृशं जनापवादं प्रसारितवान् सः। ततः छद्मवेशं धृत्वा पद्मावत्याः सविधे स्वप्रार्थनामपूरयत् सः। यथा उदयनस्य सर्वमपि अभीष्टं सिद्धं तदा स तस्य समीपे आत्मप्रकाशमकरोत् तथा तेन योऽपराधः कृतः तस्य कृते क्षमा याचिता पादयोश्च पतितम्। किन्तु क्षमाशीलः महान् च उदयनः तस्य सर्वस्यापि प्रयत्नस्य यथायथं मूल्यायनं करोतीत्यत एव सर्वदा तस्य चेष्टया विपदकूपारे निमज्जितोऽपि रक्षितो भवति। तस्मात् तस्य दुर्दिनानि गतानि सुदिनानि च आगतानि। तथाह्युक्तम्–

**मिथ्योन्मादैश्च युद्धैश्च शास्त्रदृष्टैश्च मन्त्रितैः।**
**भवद्यत्नैः खलु वयं मज्जमानाः समुद्धृताः॥**[1]

मित्रभावापन्नस्य मन्त्रिणः प्रधानं कर्तव्यं राज्ञे यथोचितोपदेशप्रदानम्। बन्धुवत् सर्वदा विपत्काले समुपस्थितिः। यतो हि राजमन्त्रिणोः परस्परसाहचर्येणैव राज्यं समृद्धं भवति। नाटकेऽस्मिन् इदं स्पष्टतया परिलक्ष्यते।

### यौगन्धरायणवासवदत्ते

मन्त्री यौगन्धरायणः आत्मनः सुखादिकं विसर्ज्य सर्वदा प्रभोः इष्टचिन्तायां व्यापृत आसीत्। शत्रुराजेन यदा राज्यमधिकृतं तदा तेनावगतं यत् कथं प्रभोः उदयनस्य हृतराज्यं पुनरुद्धर्तुं शक्यते। अस्यां परिकल्पनायां वासवदत्ता एव अन्तरायभूता। अतस्तस्याः परित्यागं विना किमपि उपायान्तरं नास्ति। किञ्च, तस्याः पुनः प्रतिष्ठा भविष्यतीति प्रतिश्रुतिरपि तेन प्रदत्ता। तस्य पतिः सिंहासने प्रतिष्ठितो भवति चेत् राजपत्नीत्वेन तस्य भाग्योदयो भविष्यति। तस्मात् सामयिकस्य दुःखस्य वरणं कृच्छ्रसाधनं च श्रेयस्करमिति विवेकः कर्तव्यः।

यौगन्धरायणेन सह वासवदत्ता अवन्तिकावेशधारिणी भूत्वा पद्मावत्याः समीपं गतवती। नारीपुरुषयोः मध्ये अवैधः सम्बन्धो भवितुमर्हति। किन्तु नारीपुरुषयोः प्रेम नाम न केवलं कामुकं प्रेम। भ्रातृभगिन्योर्मध्ये सुहृदोर्मध्ये च मधुरः प्रेमसम्बन्धो भवितुमर्हति। अत्रापि उभयोर्मध्ये तदेवासीत्। भ्रातृभगिन्योः सुमधुरः प्रेमसम्बन्धः यः अद्यतनसमाजेऽपि तयोः माधुर्यस्यानुसरणाय साहाय्यं कुरुते। यौगन्धरायणेन ज्ञातमासीत् यत् यदि तयोरिमं सम्बन्धं लोकः अन्यथा चिन्तयेत् तर्हि तेन कुत्रापि गन्तुं न शक्यते तथा तस्य सर्वमपि परिकल्पनं व्यर्थं स्यात्। तस्मात्तेन तस्य मार्गस्य अन्वेषणं

---

1. स्वप्नवासवदत्तम्–6.18

कृतं शीघ्रं प्राप्तश्च। तस्मिन्नेव तपोवने मगधराजस्य दर्शकस्य भगिनी पद्मावती समुपस्थिता। सा राजमातुः महादेव्याः दर्शनं कर्तुं तापसान् सम्प्रार्थ्य पुण्यार्जनं कर्तुं च समागता। यौगन्धरायणोऽपि अस्यैव अवकाशस्य कृते अपेक्षमाण आसीत्। तस्मात् तमवकाशं न त्यक्तवान् सः। स सर्वेषां पुरतः प्रार्थितवान् यत् तस्य भगिनीमवन्तिकां रक्षेत् इति। इत्थं स कर्तव्यपरायणो भ्राता इव सर्वदा भगिन्याः सुखमकामयत। भ्रातृभगिन्योः सुमधुरः सम्बन्धः यथा कथमपि कलङ्कितो न स्यादित्यस्मिन् विषयेऽपि तस्यावधानमासीत्।

### वासवदत्तापद्मावत्यौ

वासवदत्तापद्मावत्योरुभयोरपि आत्मिकतां यौगन्धारायणेन प्रागेव परिलक्षिता। तस्मादेव स तां रक्षितमैच्छत्। तेन कार्यद्वयं सेत्स्यति। प्रथमं तयोरुभयोश्चरित्रं रक्षितं स्यात् द्वितीयञ्च, भाविकाले तयोः सख्यता सुदृढा स्यात्।

वासवदत्ता पूर्वमेव अजानात् यत् तस्य पतिः एकदा अन्याधिकृतो भविष्यति। किन्तु पद्मावत्याः सविधे अवन्तिकावेशधारिणी न्यासरूपेण रक्षिता पतिगतप्राणा सा कदापि पद्मावतीं प्रति सपत्नीविद्वेषं नाकरोत्। अपि तु, तां सोदरप्रतिमां विविच्य अन्तःस्थितेन अनुपमेन माधुर्येण तस्या वरणमकरोत्। पद्मावत्यपि न न्यूना। सद्यः परिणीता सा वासवदत्तां प्रति राज्ञः प्रणयाधिक्यं ज्ञात्वापि न क्रुद्धा न च क्लेशाहता। अपि तु, पतिं समर्थयन्ती सा आह–"सदाक्षिण्य एवार्यपुत्रः य इदानीमप्यार्य्याया वासवदत्ताया गुणान् स्मरति"[1] इति। उभे कन्दुकक्रीडायां रते आस्तां तथा सर्वदा कदाचित् प्रासादे कदाचित् वा माधवीमण्डपे विनोदं कृतवत्यौ इति द्वितीयाङ्के सुस्पष्टं दृश्यते। परस्परं ते वैयक्तिकं विषयमपि प्रकाशयतः स्म। विवाहस्य कौतुकस्रजमपि अपि वासवदत्ता पद्मावत्याः कृते ग्रथितवती। एकदा पद्मावत्यां शिरःपीडाक्रान्तायां सत्यां वासवदत्ता सर्वमपि आयासमविगणय्य तस्याः समीपं गतवती। एताभिः घटनाभिः तयोः नितान्तं दुर्लभं सखिप्रेम एव परिस्फुरति।

पद्मावत्याः अन्योऽपि गुणविशेषः अस्मान् आकर्षति। सा वासवदत्तायाः पितरौ स्वपितरौ मन्यते। तस्मात् तौ आगच्छत इति श्रुत्वा सा धावित्वा गच्छति तयोः आतिथ्यं कर्तुम्। तयोः कुशलवार्तादिकं श्रोतुं सा उत्कण्ठिता तिष्ठति। ताभ्यां प्रदत्तं चित्रफलकं दृष्ट्वैव सा सखीं प्रत्यभ्यजानात्। अन्ते वासवदत्तायाः ज्येष्ठत्वात् तया क्षमा याचिता वासवदत्ता च स्नेहेन पद्मावतीं गृहीतवती।

### उदयनवासवदत्ते

नायके अनयोः द्वयोश्चरित्रयोः प्रेम साम्प्रतिककाले निदर्शनभूतम्। तयोरिदं

1. स्वप्नवासवदत्तम्–5.4

प्रेम सर्वेऽपि लावाणकवासिनोऽनुभवन्ति। राजा बहुपत्नीको भवितुमर्हति। किन्तु उदयनः किञ्चिद्भिन्न आसीत्। स सात्त्विकप्रेमिकस्य दृष्टान्तः, न तु राजसिकप्रेमिकस्य। तस्य चरितस्य बहूनि उदाहरणानि नाटके दृश्यन्ते।

प्रथमाङ्के लावाणकवासी एको ब्रह्मचारी आश्रममागत्य व्यज्ञपयत् यत् लावाणकग्रामे कश्चित् भीतिप्रदया अग्निलीलया वासवदत्ता भस्मीभूता। किञ्च, तस्योद्धारं कर्तुं गच्छन् मन्त्री यौगन्धरायणोऽपि भस्मीभूतः। उदयनः वासवदत्तायाः शोकेन एतावान् विह्वलो जातः यत् स अग्नौ प्राणान् त्यक्तुमुद्यतः। तदा अमात्यानां चेष्टया तस्य जीवनं रक्षितम्। किन्तु स करुणविलापं कुर्वन् मूर्छितो जातः। अधुना तु रूमण्वान् राज्ञः सेवायां निरन्तरं निरतो वर्तते। इदं श्रुत्वा वासवदत्ता किञ्चित् आश्वस्ता जाता।

यदा पद्मावत्याः धात्री आगत्य ज्ञापयति यत् पद्मावती वत्सराजस्य उदयनस्य महिषी जाता तदा वासवदत्ता पृष्टवती यत् किमुदयनः स्वेच्छया तस्या वरणमकरोत्। यदा सा ज्ञातवती यत् उदयनः हेत्वन्तरेण आगतः, किन्तु मगधराजः तस्य गुणैः मुग्धः सन् भगिनीं तस्मै अयच्छत् तदा तस्य स्वान्तं शान्तं जातम्। वासवदत्तायाः हृदये केवलमुदयनो राजते, न त्वन्यः कोऽपि।

यदा वासवदत्ता तस्य प्रियः अन्येनाधिकृतो भवतीति पश्यति तथा विवाहस्य कौतुकमाला तयैव ग्रथनीयेति जानाति तदा तस्या दुःखस्यान्त एव नास्ति। सा अविधवाकरणं नाम मालां बहुशः ग्रथिष्यति इति मनसि निश्चयमकरोत्। किन्तु तस्याः कोऽपि उपायः नास्ति। तया सपत्नीमर्दनं नाम माला ग्रथनीया। अन्यस्या आवश्यकता नास्ति। यतो हि सा मृता इति सर्वैर्ज्ञायते। मालाग्रथनस्य अन्ते सा वदति–"अहो अत्याहितम्। आर्यपुत्रोऽपि नाम परकीयः संवृत्तः। अविदा शय्यायां मम दुःखं विनोदयामि यदि निद्रां लेभे"[1] इति।

उदयनपद्मावत्योः विवाहात्परमेव यदा विदूषकेण पृष्टं यत् का भवतः प्रियतरा इति तदा राजा उदतरत्–

**पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः।**
**वासवदत्ताबद्धं न तु तावन्मे मनो हरति॥**[2]

एतदनन्तरं पद्मावती उदयनस्य सविधे वीणावादनं शिक्षितुमैच्छत्। तदा वासवदत्ता तेन स्मृता। यतो हि पूर्वं सर्वदा तौ अनुशीलनरतौ आस्ताम्।

विदूषकेण सह परिहासं कुर्वन् उदयनः अकस्मात् उक्तवान् यत स सर्वमपि

1. स्वप्नवासवदत्तम्– तृतीयाङ्कस्य अन्तिमभागः
2. स्वप्नवासवदत्तम्–4.5

वासवदत्तां वदिष्यति। तदा विदूषकः प्रत्युक्तवान् यत् सा तु मृता। तां प्रति भवान् कथं वदिष्यति। परं स तस्य प्रमादमवगतवान् तथा शोकेन विलापं कुर्वन्नासीत्।

तस्य वासवदत्तां प्रति प्रेम एतावत् प्रगाढमासीत् यत् स्पर्शमात्रेणैव तेनैवावगतं यत् सा वासवदत्तैव, नान्या कापि। पञ्चमाङ्के विवाहात् परस्मिन्नेव दिवसे भ्रमात् वासवदत्तां पद्मावतीं मत्वा तस्याः पार्श्वे शयनमकरोत्। स्वप्नं दृष्ट्वा उदयनः अवदत्–"हा वासवदत्ते, हा अवन्तिराजपुत्रि, हा प्रिये"[1] इति। परस्परं कथोपकथनं हस्तप्रसारणम् इत्यादिकं सर्वं प्रारब्धम्। किन्तु समस्तमपि परिकल्पनमपि व्यर्थं स्यादिति भिया वासवदत्ता ततः प्रस्थितवती। राजा जागरुकः सन् तामनुगच्छन् द्वारकाष्ठे आघातं प्राप्तवान्। स वासवदत्तावत् कापि गच्छतीति दृष्टवान्। विवाहात्परमपि स वासवदत्तायाः कृते उदासीन आसीत्। प्रतिक्षणं तस्य प्रेम अनुभवति स्म। बहुभ्यो दिवसेभ्यः परं कदाचित् सूर्यमुखप्रासादे घोषवतीवीणायाः स्वरं श्रुत्वा पुनः वासवदत्तायाः शोकेन विह्वलः सन् स करुणविलापमकरोत्।

अन्ते उदयनवासवदत्तयोः शुभपरिणयस्य चित्रफलकमेव उभयोः पुनर्मेलने अन्तरायभूतं सञ्जातम्। सम्पूर्णेऽपि वृत्तान्ते कुत्रापि अनैतिकता न दृष्टा।

### उदयनपद्मावत्यौ

अपरा नायिका पद्मावती। राजमातरं प्रति यथोचितं सम्मानं प्रदर्शयन्ती धर्मप्रिया सा तापसान् प्रति श्रद्धाशीला आसीत्। उक्तं च–"धर्मप्रिया नृपसुता न हि धर्मपीडामिच्छेत् तपस्विषु कुलव्रतमेतदस्याः"[2] इति। पूर्वमेव वत्सराजस्य उदयनस्य गुणैर्मुग्धा सा। तथाह्युक्तम्–"मोहं गत इति श्रुत्वा शून्यमिव मे हृदयम्"[3] इति। तमेव पतिरूपेण वाञ्छितवती सा। राजानम् उदयनं सा एतावत् प्रीणाति स्म यत् तस्य विरहेण सा उत्कण्ठिता भवति स्म। उक्तम्–"आर्यपुत्रेण विरहितोत्कण्ठिता भवामि"[4] इति। सा पत्या सह वीणावादनं शिक्षितुमिच्छति।

राज्ञः उदयनस्य समीपे का अधिकप्रिया इति ज्ञात्वापि सा वदति–"सदाक्षिण्य एवार्यपुत्रः य इदानीमप्यार्य्याया वासवदत्ताया गुणान् स्मरति"[5] इति। अनेन पतिप्रेम्णः महिमा प्रकाशितो भवति।

---

1. स्वप्नवासवदत्तम्–5.6
2. स्वप्नवासवदत्तम्–6.1
3. स्वप्नवासवदत्तम्– प्रथमाङ्कस्य अन्तिमभागः
4. स्वप्नवासवदत्तम्– चतुर्थाङ्कस्य प्रथमभागः
5. स्वप्नवासवदत्तम्–5.4

किञ्च, पतित्वेन राजा उदयनोऽपि कर्तव्यपरायणः। राजनैतिकं लक्ष्यं सम्प्राप्तुं स तया सह विवाहं कृतवान् चेदपि कदापि तस्या अवमाननां नाकरोत्। अन्तिमे स सर्वमपि स्वीकर्तुं प्रचेष्टामकरोत्। सकृत् तस्याः प्रशंसा अपि तेन कृता–"पद्मावती बहुमता मम यद्यपि रूपशीलमाधुर्यैः"[1] इति।

अन्ते इदमेव वक्तुं शक्यते, तात्कालिके समाजे उदयनवासवदत्तयोः बहुश्रुता प्रेमकथा तावत् स्वप्नवासवदत्तम्। स्वप्ने दृष्टा वासवदत्ता इत्यर्थे एव नाटकस्य ईदृशं नामकरणं कृतम्। इयं वासवदत्तैव प्रधाननायिका। तत्र नायकः उदयनः तस्याः प्रेम्णि एतावान् मुग्ध आसीत् यत् स्वप्नेऽपि तस्याः दर्शनं कांक्षते स्म। तस्मात् नैतिकप्रेम्णः बहुविधा दशा भवितुमर्हति। किन्तु एतादृशी दशा अन्यतमा या संस्कृतवाङ्मये अत्यन्तं विरला।

**सन्दर्भग्रन्थसूची-**

1. वन्द्योपाध्याय, शान्ति (सम्पा.), स्वप्नवासवदत्तम्, संस्कृत पुस्तक भाण्डार, कलकाता–1402 बङ्गाब्दः।
2. वसु, अनिलचन्द्र (सम्पा.), स्वप्नवासवदत्तम्, संस्कृत बुक डिपो, कलकाता–2004।
3. त्रिपाठी, यदुपति (सम्पा.), स्वप्नवासवदत्तम्, बि. एन. पब्लिकेशन, कलकाता–2006।
4. वन्द्योपाध्याय, धीरेन्द्र (सम्पा.), संस्कृत साहित्येर इतिहास, पश्चिमबङ्ग राज्य पुस्तक पर्षत्, कलकाता–1988।
5. मुखोपाध्याय, गोपेन्दु, संस्कृत साहित्येर इतिवृत्त, इउनाइटेड बुक् एजेन्सि, कलकाता–1419 बङ्गाब्दः।
6. गुप्त, हरिदास (सम्पा.), स्वप्नवासवदत्तम् (हिन्दी), चौखम्बा, वाराणसी–1945।



1. स्वप्नवासवदत्तम्–4.5

# संस्कृतसाहित्ये एकबिम्बात्मककाव्यानामध्ययनम्

**कृपा राम शर्मा***

संस्कृतसाहित्यं प्राचीनकालादेव सुविस्तृतं सुविशालं च वर्तते। अस्याः साहित्यं धार्मिक-साहित्यिक-आध्यात्मिक-दार्शनिक-वैज्ञानिक-राजनैतिकादिज्ञानेन विविधकाव्य-विधाभ्यश्च परिपूर्णं विद्यते। एतादृशं साहित्यं न कस्याश्चित् भाषायाः विद्यते। न च कस्याश्चित् भाषायाः परम्परा एवम्प्रकारेण अविच्छिन्नप्रवाहरूपेण एतादृग्दीर्घकालात् प्रवर्तमाना दरीदृश्यते। प्राचीनकाले वाग्देव्याः समुपासकैः नैकासु विधास्वनेके ग्रन्थाः विरचिताः सन्ति। यथा पूर्वकाले कविभिः स्वलेखन्या समनुरञ्जिता आसीद् भगवती भारती तथैव तदनन्तरमपि अर्वाचीनं साहित्यं प्राचीनकाव्यविधादृष्ट्या नित्यं नवीनं समुपलभ्यते। यद्यपि समकालिकसाहित्यं गद्यपद्यनाट्यविधासु संवलितं विद्यते, किञ्च तत्रापि पद्ये महाकाव्य-लघुकाव्य-खण्डकाव्य-शतककाव्य- लहरीकाव्य-स्तोत्रकाव्य-गीतादिललितकाव्यानां रचना दृश्यते तत्रैव गद्ये नैसर्गिकवस्तुविन्यासेन शिल्पविधानेन च उपन्यास-कथा-लघुकथा-स्पशकथा-टुप्कथा-व्यंग्यकथा-ललितकथा-ललितनिबन्ध-यात्रावृत्त-पत्रसाहित्य-जीवनवृत्त-आत्मकथा-हास्यकणिकानां समावेशोऽपि वर्तते। नाट्ये लघुनाटक-नवोरूपकं च वीथिनाटकनवीनकाव्यविधानामपि रचना दरीदृश्यते। महाकाव्य-लघुकाव्यनवगीत-रागकाव्य-संगीतिका-लहरीकाव्य-पैरोडीकाव्य-प्रतीकात्मकगीतिकाव्य-समस्यापूर्ति-काव्य-एकबिम्बात्मककाव्यानामपि रचना जाता। छन्दोविधानदृष्ट्या वर्ण-मात्रिक-दोहा-सोरठा-चौपाई-सवैया-कविता-दण्डकानां लेखनपरम्परा विद्वत्सु विदितैव। छन्दोमुक्तरचनासु हायकूतान्का। सिजोसानेटविधास्वपि विदुषां प्रवृत्तिरस्ति। एवं प्रकारेण इदानीन्तने काले नैकासु प्राचीनतरविधासु काव्यरचनाप्रपञ्चचतुराः कवयः भारतीमातुराधयितुं संलग्नाः सन्ति।

## एकविम्बात्मकं काव्यम्-

संस्कृतभाषायां बिम्बशब्दस्य अर्थः भवति प्रतिमूर्तिः (छविः) हिन्दीभाषायां बिम्ब-इत्युक्ते झलक इति शब्दः प्रयुज्यते। आङ्ग्लभाषायां तु **बिम्बशब्दः इमेज** इति शब्दस्य रूपान्तरणमस्ति, अस्यार्थो भवति मूर्तरूपप्रदानम्। काव्ये कार्यस्य सजीवमूर्तिकरणस्य कृते बिम्बयोजना भवति। काव्ये बिम्बं तत् शब्दचित्रं मन्यते यत्

---

* शोधच्छात्रः, देहरादून, उत्तराखण्डः।

कल्पनाद्वारा ऐन्द्रियानुभवान् आश्रित्य निर्मीयते। एकबिम्बात्मकं काव्यं प्रति इदानीन्तने काले विदुषां विशिष्टैव प्रीतिरवलोक्यते। यत्र समकालिक-काव्यतत्त्वानां किञ्चित्परिवर्तितं स्वरूपं प्रतिभाति। एकबिम्बात्मकं काव्यं तदेव काव्यमुच्यते यस्मिन् एकमेव बिम्बमाधारीकृत्य अनेकासु काव्यधारासु विविधाच्छायासु च काव्यकरणप्रवृत्तिरवलोक्यते। आङ्ग्लभाषायाञ्चेदं काव्यं मोनो इमेज पोएम्स कथ्यते अस्य लक्षणस्य विषये रहसबिहारी द्विवेदि महोदयेन यथोक्तं तन्मञ्जुलताप्रणीते "आधुनिकसंस्कृत साहित्य की परिक्रमा" इति ग्रन्थे एवं विद्यते -

**लघुबिम्बात्मकं काव्यं यत्पाडैझरादिना।**
**रचितं आङ्ग्लभाषायां संस्कृते माधवादिभिः॥**
**लघुबिम्बात्मके काव्ये चित्रमुद्भावितं परम्।**
**प्रत्यक्षीक्रियते सद्यो भावकेन्द्रियवृत्तिभिः॥**
**यत्रानुव्याहृतं वृत्तं बौद्धिकं भावनामयम्।**
**कविनान्नूतनीभूतं प्रत्यक्षमिव भासते॥**[1]

एकबिम्बात्मके काव्ये विषयानुकूलता आवश्यको, तदभावे काव्यम् अलङ्कृतमपि न शोभते अस्य काव्यस्य विशिष्टानि सोपानानि यथा विद्यन्ते तदेवम् (1) वस्तुनः प्रत्यक्षनिरूपणम् (2) लयबद्धः शब्दक्रमः (3) लाघवता (4) सर्वगम्या भाषा (5) छन्दः परम्पराया अनुगमः (6) इन्द्रियग्राह्य बिम्बविधानञ्चेति आचार्यबनमालीबिश्वालस्य काव्यतत्त्वसमन्वितौ एकबिम्बात्मकस्य लघुबिम्बकाव्यस्य वा लक्षणमस्ति। तद्यथा-

**एकं बिम्बं समाश्रित्य काव्यं विरच्यते यतः।**
**एक-बिम्बात्मकं काव्यं साहित्ये समकालिके॥**

**लघुबिम्बं समाधृत्य भावधारासु कासुचित्।**
**भिन्नछायासु तत् काव्यं लघुबिम्बञ्च कथ्यते॥**

**विश्वस्य सर्वभाषासु विधेषा तु प्रसिद्ध्यति।**
**तत्काव्यमाङ्ग्लभाषायां मोनो इमेजिति स्मृतम्॥**

**नव-बिम्ब- प्रतीकानां मिथकानां विशेषतः।**
**बिम्बपूर्णा विनियोगोऽप्यत्र व्यञ्जनानां भवेत् पुनः॥**

**एतेषामुपयोगाच्च शब्दानां लाघवं स्वतः।**
**बलं यत्रार्थसौन्दर्ये प्रदीयते च सर्वथा॥**[2]

---

1. आ.सं.का.प.पृ. 109
2. काव्यतत्त्वसमन्वितिः बनमालीबिश्वालः

अर्थात् एकबिम्बात्मकं काव्यमाधुनिकसंस्कृतसाहित्ये एकबिम्बमाश्रित्य विरच्यते। बिम्बानां प्रयोगस्तु संस्कृतसाहित्ये आरम्भकालादेव दरीदृश्यते। प्रतीकानामपेक्षया बिम्बम् इन्द्रियसंवेद्यं भवति। अर्थात्तेषामनुभूतिः केनचिन्न केनचिद् इन्द्रियेण युक्ता भवति। अनेनैव हेतुना साहित्ये दृश्यबिम्बैः सह श्रव्य-घ्राण-स्पर्शबिम्बानामपि प्रयोगो दरीदृश्यते। सामान्यतया बिम्बानां त्रयो भेदाः भवन्ति, **इन्द्रियं बिम्बम्, काल्पनिकं बिम्बम्, प्रेरकानुभूति-आश्रितं बिम्बम्च।**

**ऐन्द्रियं बिम्बम्**

- चाक्षुषबिम्बम्
- श्रव्यबिम्बम्
- स्पर्शबिम्बम्
- घ्राणबिम्बम्
- आस्वाद्यबिम्बम्

**काल्पनिकं बिम्बम्**

- स्मृतिबिम्बम्
- कल्पितबिम्बम्

**प्रेरकानुभूति-आश्रितं बिम्बम्**

- सरलबिम्बम्
- मिश्रितबिम्बम्
- तात्कालिकबिम्बम्
- संकुलबिम्बम्
- भावातीतबिम्बम्
- विकीर्णबिम्बम्

**बिम्बपरम्परा-**

बिम्बात्मककाव्यस्य परम्परायाः यदि अन्वेषणं कुर्मश्चेत् तदा विश्वसाहित्यस्य प्राचीनतमे ग्रन्थे ऋग्वेदे सर्वप्रथमं प्रयोगः दृश्यते। यथा-

**उक्थेष्विन्नु शूर येषु चाकन्त्स्तोमोष्विन्द्र सुद्रियेषु च।**
**तुभ्येदेता यासु मन्दसानः प्रवायवे सिस्त्रते न शुभ्राः॥**[1]

1. ऋग्वेद 3.11.2

मन्त्रेऽस्मिन् रूपकेण सह बिम्बस्य विधानं विद्यते। अर्थात् आत्मारूपी इन्द्रः यदा शरीराद् बहिर्गच्छति तदा सः सर्वान् रोदयति।

**विश्वस्य हि श्रुष्टये देव ऊर्ध्वः प्र बाहवा पृथुपाणिः सिसर्ति।**
**सो अपां नपादनभिम्लातवर्णोऽन्यस्येवेह तन्वा विवेष।।**[1]

अस्मिन् मन्त्रे सूर्यं दीर्घ–दीर्घकिरणरूपहस्तवन्तमित्यस्य वर्णेन सह सुन्दरबिम्बस्य संरचना विद्यते।

**रघुवंशमहाकाव्ये बिम्बविधानम्-**

कविकुलगुरुमहाकविकालिदासेन रघुवंशमहाकाव्यस्य प्रारम्भे विलक्षणबिम्बस्य प्रयोगः कृतोऽस्ति तद्यथा–

**क्व सूर्यप्रभवो वंशः क्व चाल्पविषया मतिः।**
**तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्।।**[2]

अस्मिन् स्थले क्षुद्रनौकया दुस्तरसमुद्रतरणं अज्ञानतायाः कारणम् इति सुन्दरं बिम्बं महाकविकालिदासेन प्रतिपाद्यते। इतोऽपि मेघदूतकाव्येऽपि महाकविना सुन्दरं बिम्बविधानं कृतं विद्यते। तद्यथा–

**मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां**
**वामश्चायं नदति मधुरं चातकस्ते सुगन्धः।**
**गर्भाधानक्षणपरिचयान्नूनमाबद्धमालाः**
**सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः।।**[3]

**संतप्तानां त्वमसि शरणं तत्पयोद! प्रियायाः**
**सन्देशं मे हर धनपतिक्रोधविश्लेषितस्य।**
**गन्तव्या ते वसतिरलका नाम यक्षेश्वराणां**
**वाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या।।**[4]

अनेन प्रकारेण महाकविना सुन्दरविप्रलम्भस्य करुणकोमलभावेन अद्भुतबिम्बस्य प्रतिपादनं कृतं वर्तते। आधुनिककाव्यकारः आचार्यबनमालीबिश्वालः अस्यां काव्यविधायां बहुरचानां कृतवान् तद्यथा–

---

1. ऋग्वेद 2.38.2
2. रघुवंशमहाकाव्यम् पृ. 5
3. मेघदूतम् 1.10
4. मेघदूतम् 1.7

आचार्यबनमालीबिश्वालस्य बिम्बविधानम्-

कार्तिकवैशिष्ट्यानि च पूर्णिमायास्तु कानिचित्।
प्रायस्तान्येव भिद्यन्ते स्थानकालप्रसङ्गतः।।

पूर्णिमा त्रिपुरार्याख्या क्वचिदेषाऽपि कथ्यते।
त्रिपुरदानवस्याद्य हत्या कृता शिवेन वै।।

गङ्गास्नानाभिधा चैषा पूर्णिमाऽपि निगद्यते।।

गङ्गास्नानार्थमद्यैव देवा मर्त्ये समागताः।
अद्य मत्स्यावतारस्य प्राकट्यञ्चैव मन्यते।।

विष्णोर्दशावतारेषु प्रथमो यश्च मन्यते।
प्रलयाद्रक्षितुं सृष्टिं मत्स्यरूपं गृहीतवान्।।

नवसृष्टिमयीं नौकाप्रक्षितवान्निमज्जनात्।
अत एव दिनस्यास्य महत्त्वं वरीवर्तते।।

नौकादीपप्रवाहस्य प्रथा क्वचित्तु दृश्यते।
वल्कलेन कदल्याश्च नौका निर्मीयते नवा।।

तदुपरिस्थदीपास्तु प्रवाह्यन्तेऽद्य चोत्कले 42।
अद्य प्रदत्तदानानां महत्त्वं वर्ततेऽधिकम्।।

दीयते यत् किमप्यद्य दातुर्भवतिदम्।
दीपदानन्तु चाद्यैव क्वचित् संस्कृतिसम्मतम्।।

क्वचिदाकाशदीपस्य प्रथाऽपि दरीदृश्यते।
दीपनेनात्मदीपस्य चान्तरात्मा प्रदीपितः।।[1]

इतोऽपि-

प्रियतमे!

गुप्तेच्छाऽऽसीत्

त्वया सह तर्तुं भवं घोरम्,

इच्छाऽप्यासीत्

त्वया सह यापयितुम्

अवशिष्टजीवनस्य कालम्,

---

1. वेलेण्टाइन डे सन्देशः बनमालीबिश्वालः पृ. 74

**इच्छन्नासम्**
**त्वया सह स्थापयितुं गृहम्**
**वार्द्धक्यस्य मम साहायकम्।**
**परं बत! प्रियतमे! गोपनेन विवाहो रचितः,**
**कदाचित्ते मनसि स्याद् भयम्**
**सूचितश्चेत् परिचितोऽप्यहं**
**विवाहे ते भवेयं बाधकः,**
**संसारो हि तैल-लवणकः।1।**

एवम्प्रकारेण एकबिम्बात्मककाव्यविधायाः परम्परा प्राचीनकालाद् प्रारभ्य इदानीं यावात् अविच्छिन्नरूपेण प्रवर्तमाना विद्यते।

**सन्दर्भग्रन्थाः-**


- प्रियतमा, बनमालीबिश्वाल पद्मजा प्रकाशन, प्रयागः, 1999
- वेलेण्टाइनसन्देशः बनमालीबिश्वाल पद्मजा प्रकाशन, प्रयागः 2000
- वैतरणी, अभिराजराजेन्द्र मिश्र, वैजयन्त प्रकाशन, इलाहाबाद, 2010
- मृत्युशतकम्, हर्षदेवमाधवः चारुतर संस्कृत परिषद्, आणद, 1999
- समकालिकसाहित्य की नूतनप्रवृत्तियां, बनमालीबिश्वाल, न्यु भारतीय बुक का. 2020
- संस्कृत साहित्य बीसवी शताब्दी, राधावल्लभत्रिपाठी, राष्ट्रिय संस्कृत संस्थान, नवदेहली, 1999
- संस्कृतवाङ्मय का बृहद् इतिहास (आधुनिक संस्कृत साहित्य का इतिहास) पद्मभूषण आचार्यश्रीबलदेव उपाध्याय, राधावल्लभ त्रिपाठी, उत्तरप्रदेश संस्कृतसंस्थान, लखनऊ, 1997
- अग्निशिखा, पुष्पादीक्षितः ऋतम्भरा प्रकाशन, जबलपुर, 1984
- अजेयभारतम्, शिवप्रकाशभारद्वाजः, धर्ममहामण्डल, लहुरावीर, वाराणसी
- अधुना गौतमपटेल, संस्कृत साहित्य अकादमी, गान्धीनगर, 1999
- आक्रन्दनम्, हरिदतशर्मा, आञ्जनेय प्रकाशन, इलाहाबाद, 1998
- आग्नेयः श्रीऋषिराजचुन्नीलाल, अग्निप्रकाशन, रायगढ़, 1994
- आधुनिकसंस्कृतकाव्य की परिक्रमा मञ्जुलताशर्मा, राष्ट्रिय संस्कृत संस्थान, नवदेहली, 2011
- आधुनिकसंस्कृतकाव्यपरम्परा, श्रीकेशवमुसलगांवकर, चौखम्बा विद्याभवन, वाराणसी, 2004




 ISSN : 0975-1769

# “एजाद्योः किम्? प्रेदिधत्” इत्यत्र नागेशकृतखण्डनस्य औचित्यानुशीलनम्

**शम्भुनाथ भट्टः** *

[प्रबन्धेऽस्मिन् नागेशोपाध्यायकृतखण्डनम् अत्र युक्तं नास्तीति प्रतिपादितम्। नागेशेन याः युक्तयः प्रदर्शिताः ताः कथमयुक्ताः, प्राचीनैः दीक्षितादिभिः यत्प्रतिपादितं तदेव युक्तमिति च प्रपञ्चितम्। प्रेदिधत् इति रूपस्य अनभिधानकथनं कुतः युक्तं नेति च व्याख्यातम्। पक्षद्वयस्यापि युक्तयः, तत्र प्राबल्यविचारश्च कृतः।]

**कौमुद्यां विचारोपक्रमः**

पाणिनीये सूत्रजाले “एत्येधत्यूठ्सु”[1] इति वृद्धिविधायकं सूत्रम्। वैयाकरण-सिद्धान्तकौमुद्यां भट्टोजीदीक्षितैः अच्सन्धिप्रकरणे व्याख्यातम्। तत्र अवर्णादेजाद्योः एत्येधत्योः ऊठि च परे वृद्धिः एकादेशः स्यात् इत्युक्तम्। “वृद्धिरेचि”[2] इत्यस्मात् पदद्वयमपि अनुवर्तते। एतिश्च एधतिश्च इति श्तिपा निर्देशः। एचि इति एत्येधत्योः उभयोः विशेषणम्। अतः उपैति, उपैधते इति उदाहृत्य एजाद्योः किम्? उपेतः, मा भवान् प्रेदिधत् इति प्रत्युदाहरणं दत्तम्।

इण्धातोः एध्धातोः एजादित्वं यदा तदैव सूत्रमिदं वृद्धिं विधत्ते। यदि एजाद्योः इत्यर्थः न स्यात् तर्हि उपेतः, प्रेदिधत् इत्यत्रापि वृद्धिः स्यादिति प्रत्युदाहरणं प्रदर्शितम्। तत्र प्रोपसर्गपूर्वक-एध्धातोः णिजन्ताल्लुङि चङि ‘णौ चङ्युपधाया ह्रस्वः’[3] इति उपधाह्रस्वे ‘चङि’[4] इति द्वित्वे प्र इ धि धि अ ति इति जाते अभ्यासस्य जश्त्वे णिलोपे इतश्च लोपे प्र इ दि ध् अ त् इति जाते ‘आद्गुणः’[5] इति गुणे ‘प्रेदिधत्’ इति रूपम्। अत्र एधतेः एजादित्वाभावेन एचीति विशेषणत्वे एव वृद्धिः वार्यते। तदभावे तु वृद्धिः स्यादेव। माङ्योगसत्वेन आटश्च इति वृद्धिः न

---

* शोधच्छात्रः, कनिष्ठ/वरिष्ठ अध्येता, कर्नाटकसंस्कृतविश्वविद्यालयः, बेङ्गलूरु।

1. अष्टाध्यायी (6.1.89)
2. अष्टाध्यायी (6.1.88)
3. अष्टाध्यायी (7.4.1)
4. अष्टाध्यायी (6.1.11)
5. अष्टाध्यायी (6.1.87)

शङ्क्या। "न माङ्योगे"[1] इति आट एव निषेधात्।

**नागेशोपाध्यायाशयः**

नागेशोपाध्यायैः तावत् 'प्रेदिधत्' इति अवतार्य "परे तु"[2] इति आरब्धम्। तदभिप्रायस्तु एचि इति एधतेः न विशेषणम्। अतः प्रत्युदाहरणम् न युज्यते। प्रेदिधत् इत्यादीनामनभिधानमेव इति। एतैः प्राचां मतमेव आश्रित्य दीक्षितमतं खण्डितम्। प्राचां त्वाशयः एचीति एतेरेव विशेषणम्। न तु एधतेः अव्यभिचारात्। "संभव-व्यभिचाराभ्यां हि स्यात् विशेषणमर्थवत्" इति आश्रितत्वात्। न हि एध्धातोः एजाद्यतिरिक्तं रूपं सम्भवति। ऊठ् विषयेऽपि नापेक्षते असंभवात्।

तत्र असम्भवादिति न उचितमिति शङ्का। यतोऽहि जनौः इत्यत्र जनशब्दात् आङ् उपसर्गपूर्वक-अवधातोः क्विपि 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च'[3] च ऊठि आ ऊ इति स्थिते गुणे ओ इति जाते परादिवद्भावेन ऊठ्त्वम् कृतैकादेशे आनीयताम्। तदा एजादिः ऊठ् सम्भवति। तत्रैव अनेन वृद्धिः स्यात्। न तु विश्वौहः इत्यादौ। अतः लक्ष्यासिद्धरूपदोषेण "औः" इत्यादेः अनभिधानमेव आश्रीयते।

**मनोरमायां प्रस्तुतविचारसरणिः**

तत्र मनोरमायां प्राचां मतमुक्त्वा "अत्र कैयटः"[4] इति कैयटाशयः उक्तः। एधतेरपि एचीति विशेषणम्।"मा भवान् प्रेदिधत्" इत्यत्र व्यभिचारात्। यदा 'णौ चङ्युपधाया ह्रस्व'[5] इति ह्रस्वे कृते नायमेधतिः इति शङ्कितम्। एकदेशविकृतन्यायेन परिहृतञ्च। तत्र धिशब्दस्य द्वित्वे धिधि इति यदा भवति तदा वस्नसोरिव प्रकृतिप्रत्ययविभागसम्मोहो भवतीत्यतः एधतेः ज्ञानं न स्यादिति। एषापि शङ्का न तिष्ठति। द्विःप्रयोगो द्विर्वचनं षाष्ठमिति द्विरुच्चारणमेव आश्रीयते इति कृत्वा न सम्मोहः। यदि प्रकृतिप्रत्ययविभागे सम्मोहः तर्हि णिलोपोपि न स्यादिति च। तत्र अन्तरङ्गत्वात् पूर्वोपस्थितनिमित्तकत्वेन आदौ "चङि"[6] इति द्वित्वे ह्रस्व एव न स्यादिति शङ्का। ओणेः ऋदित्करणेन बहिरङ्गस्यापि "णौ चङ्युपधाया ह्रस्वः"[7] इति ह्रस्वस्य आदौ प्रवृत्तिः स्वीक्रियते इति न दोषः।

---

1. अष्टाध्यायी (6.4.74)
2. लघुशब्देन्दुशेखरः भागः- 1. पृ. सम् - 137
3. अष्टाध्यायी (6.4.20)
4. प्रौढमनोरमा पृ. सम् - 216
5. अष्टाध्यायी (7.4.1)
6. अष्टाध्यायी (6.1.11)
7. अष्टाध्यायी (7.4.1)

## माधवकृताशङ्का

एवं कैयटेन साधितेऽपि माधवः आक्षिपति। माधवस्यायमाशयः[1] – एध्धातुना ण्यन्तधातोः ग्रहणं शब्दान्तरत्वात् न भवति। अतः मा भवान् प्रेदिधत् इत्यत्र अतिव्याप्तिरपि नास्ति। ण्यन्तस्य शब्दान्तरत्वात् ग्रहणं न भवति इत्यत्र प्रमाणमपि प्रदर्शयति। “न भाभूपूकमिगमिप्यायीवेपाम्”[2] इत्यत्र “ण्यन्तस्य चोपसंख्यानम्”[3] इति वार्तिकमुक्तम्। कैयटन्यासकारहरदत्तादिभिः सर्वैरपि शब्दान्तरत्वादप्राप्तौ इदमुपसंख्यानमिति व्याख्यातम्। यदि धातुना ण्यधिकस्यापि ग्रहणं स्यात् तर्हि इदमुपसंख्यानं व्यर्थं स्यात्। किञ्च “उपसर्गात्सुनोतिसुवतिस्यतिस्तौतिस्तोभति-स्थासेनयसेधसिचसञ्जस्वञ्जाम्” [4]इत्यत्र अभिषावयति इति उदाहृत्य सावयति इति ण्यन्तेन अभेःयोगो वर्तते। न तु सुनोतिं प्रति इति कथं षत्वमिति शङ्कितम्। प्रकृत्यर्थविशेषकत्वेन च समाधानं दत्तम्। इदं शङ्कासमाधानं न युज्यते यदि धातुना ण्यन्तस्यापि ग्रहणं स्यात्।

‘प्रकृतिग्रहणे ण्यन्तस्यापि ग्रहणं स्यात्’ “हेरचङि”[5] इति लिङ्गात् इति न भ्रमितव्यम्। तत्तु ज्ञापकं कुत्वविषये एव। यतो हि अभ्यासात् परस्य हिनोतेर्हस्य कुत्वं स्यात् न तु चङि इत्यर्थकं हेरचङि इति सूत्रम्। तत्र चङि कुत्वं न भवेदिति अचङि इति प्रतिषेधः। ण्यन्तस्य धात्वन्तरत्वात् केवलस्य हिनुधातोस्तु चङ्प्रत्ययो न भवतीति अचङीति निषेधः व्यर्थः। स व्यर्थः सन् ज्ञापयति ण्यधिकस्यापि ग्रहणं भवतीति। इदानीं ण्यन्ताच्चङि प्राप्तं कुत्वं बाधितुमचङीति प्रतिषेधः चरितार्थः। इदं ज्ञापकं कुत्वविषये एव इति नात्र तत्प्रसक्तिः। एवं च कैयटाशयः न युक्तः इति माधवाशयः।

## दीक्षितैः कैयटाशयसमर्थनम्

परं तु दीक्षिताः कैयटाशयमेव समर्थयन्ते[6]। पूर्वं माधवकृताशङ्कायां यदुक्तं ण्यन्तस्य शब्दान्तरत्वात् एधतिग्रहणेन न ग्रहणमिति, तदङ्गीकृत्यैवोच्यते शब्दान्तरत्वमस्ति चेदपि प्रकृतेः एध्रूपत्वमाश्रित्य सूत्रप्रवृत्तिरिश्यते इति। एध्रूपत्वं प्रकृतेराश्रित्यैव एत्येधत्यूठ्सु इति प्रवर्तते। उपैधते इत्यत्र तिङन्ते एध्रूपत्वं नास्ति चेदपि प्रकृतेस्तदस्तीति वृद्धिर्भवति। प्रकृतेः ग्रहणं कार्यमित्यत्र किं प्रमाणमिति शङ्कायामुच्यते “उपसर्गात्सुनोति-

1. प्रौढमनोरमा पृ. सम् – 219
2. अष्टाध्यायी (8.4.34)
3. महाभाष्यम् भागः– 6. पृ. सम् – 227
4. अष्टाध्यायी (8.3.65)
5. अष्टाध्यायी (7.1.56)
6. प्रौढमनोरमा पृ. सम् – 219

सुवतिस्यतिस्तौतिस्तोभतिस्थासेनयसेधसिचसञ्जस्वञ्जाम्"[1] इति सूत्रे पठितं वार्तिकम्। तथा हि "सिद्धं त्ववयवानन्यत्वात्"[2] इति वार्तिकं तत्र। "सुनोत्यादीनां षत्वे ण्यन्तस्योपसंख्यानमधिकत्वात्"[3] इति वार्तिके अभिषावयति इत्यादौ षत्वार्थं ण्यन्तस्य उपसंख्यानं कर्तव्यम्। कुतो न भवति इत्यत्र हेतुरुक्तः अधिकत्वादिति। ण्यन्ते प्रयोजकस्य प्राधान्यात् तत्रैव अभेः उपसर्गत्वात् सूत्रोक्तसुनोतेरपेक्षया व्यतिरिक्तस्य ण्यन्तार्थस्य सत्वात् षत्वं न स्यादिति। तत्र समाधानवार्तिकम् – "न वा अवयवस्य अनन्यत्वात्"[4] इति। ण्यन्तस्य उपसंख्यानं न वा कार्यम् अवयवस्य अनन्यत्वात् इति तदर्थः। ण्यन्तधातोः योऽवयवो भवति शुद्धधातुः तन्निरूपितोपसर्गत्वमस्ति इति कृत्वा षत्वं भवत्येव इत्युक्तम्। अभिषुणोति यः, तं प्रेरयति अभिषावयति। एवञ्चात्र ण्यन्तप्रकृतेः कार्यं भवति।

पूर्वपक्षिणा "न भाभूपूकमिगमिप्यायीवेपाम्"[5] इति सूत्रस्य वार्तिकं हेतुत्वेन उक्तं ण्यन्तग्रहणे प्रकृतेर्ग्रहणं न भवतीत्यत्र। परं स हेतुः अत्र साधको न भवति। यतो हि यथा प्रभवनमित्यत्र णत्वं न भवति तथा परिभापनम् इत्यत्रापि णत्वं न भवति। तदर्थं तत्र ण्यन्तस्योपसंख्यानमित्युक्तम्। न भाभू.. इत्यादिना सूत्रेण एभ्यः परस्य कृतः नकारस्य णत्वनिषेधः उच्यते। प्रकृतेः ग्रहणं भवति चेदपि णिचः व्यवधानात् तत्र निषेधः न भवति। अतः वार्तिकमपेक्षितम्। एवं च कैयटखण्डनपरः माधवग्रन्थः न युक्तियुक्तः प्रमाणविरुद्धश्च।

एवं कैयटमतं समुपस्थापयन्तः दीक्षिताः कौमुद्याम् एत्येधत्यूठ्सु इति सूत्रव्याख्यानावसरे एत्येधत्योः उभयोः विशेषणत्वेन एचि इति अन्वेति इति कृत्वा एजाद्योः इति अवोचुः। अथापि नागेशोपाध्यायाः इदं खण्डयन्ति।[6] तेषामयमाशयः – एत्येधत्यूठ्सु इत्यत्र भाष्ये "इणिकारादौ प्रतिषेधः"[7] इति वार्तिकं प्रमाणम्। तत्र एधतेः उपादानं नास्ति। वृत्तिकाराणां ग्रन्थोऽपि तदुपोद्बलक एव। तद्वार्तिकप्रत्याख्यानार्थं भाष्याकारैः यः योगविभागः कृतः "एत्यधत्योः"[8] इति तत्र एधतिग्रहणं सम्भवमात्रेण उपरञ्जकतया विशेषणम् इति मन्यन्ते।

---

1. अष्टाध्यायी (8.3.65)
2. महाभाष्यम् भागः 6. पृ. सम् – 196
3. महाभाष्यम् भागः 6. पृ. सम् – 196
4. महाभाष्यम् भागः 6. पृ. सम् – 196
5. अष्टाध्यायी (8.4.34)
6. लघुशब्देन्दुशेखरः भागः 1. पृ. सम् – 137
7. महाभाष्यम् भागः – 5. पृ. सम् – 98
8. महाभाष्यम् भागः – 5. पृ. सम् – 98

## नागेशकृतखण्डनस्यौचित्यानुशीलनम्

इदानीमस्माभिः विचार्यते किं नागेशकृतखण्डने औचित्यमस्तीति। वृत्तिग्रन्थः माधवग्रन्थश्च सयुक्ति एव दीक्षितैः निराकृतः इति तस्य उपोद्‌बलकत्वेन आश्रयणं न युक्तम्। स्वनिरूपिते उपबृंहणमिष्यत एव इति यद्युच्यते तर्हि स एव युक्तः इत्यत्र प्रमाणं नास्ति। तथा च एत्येधत्यूठ्सु इत्यत्र भाष्ये[1] एत्येधत्योः विषये रूपग्रहणं कार्यमुत धातुग्रहणमिति विचारितम्। अयमाशयः – यदि एति इति रूपबोधकं तर्हि उपैति, प्रैति इत्यादौ वृद्धिः स्यात्। परं तु उपैषि, उपैमि इत्यत्र न स्यात्। एधति इति तावत् रूपग्रहणं भवितुमेव नार्हति। एधते इत्याद्याः आत्मनेपदप्रत्ययाः भवन्ति एध्धातोः। तत्साहचर्याच्च एति इत्यत्रापि धातुग्रहणमेव इति निश्चितम्। रूपग्रहणपक्षस्तु लाधवात् एति इत्यत्र सम्भवात् उपन्यस्तः। यदि धातुग्रहणमिति तर्हि उपेतः प्रेतः इत्यत्रापि वृद्धिः प्राप्नोति इति आक्षेपे इदं वार्तिकम् – "इणीकारादौ प्रतिषेधः"[2] इति। इकारादेः इण्धातोः इतः, यन्ति इत्यादौ वृद्धिः न भवति इति तदर्थः। "योगविभागात्सिद्धम्"[3] इति तत्रैव अग्रे भाष्यवार्तिकेनोक्तम्। 'वृद्धिरेचि' ततः "एत्येधत्योः" इति पठ्यते। एचि इति अनुवर्तते। एत्येधत्योश्च एचि वृद्धिर्भवति। ततः 'ऊठि' ऊठि च वृद्धिर्भवतीति। अत्र भाष्यकारैः एचि इति एत्येधत्योः इत्यत्र विशेषणत्वेन अन्वेति इत्युक्तम्। अतः उभयविशेषणत्वं युज्यतेतराम्।

तर्हि इणीकारादौ प्रतिषेधः इत्यत्र वार्तिके कुतः इण्धातुविषये केवलं प्रतिषेधः उक्तः इति शङ्का स्यात्। तत्र इण्धातुः उपलक्षणं एधतेरपि इति वक्तुं शक्यते। पूर्वं रूपग्रहणपक्षे इण्धातोरेव सम्भवात् रूपग्रहणपक्षे दोषमुक्त्वा पक्षान्तरं धातुग्रहणमिति भवतु इति "अथ धातुग्रहणम्, सिद्धमेतदिति। किं तर्हीति"[4] भाष्यम्। रूपग्रहणपक्षे यः दोषः स धातुग्रहणपक्षे वार्यते। धातुग्रहणपक्षे दोषः अस्ति किमित्यर्थे किं तर्हीति भाष्ये पृष्टम्। अतः धातुग्रहणपक्षे प्रकृतः इण्धातुः इति कृत्वा तत्रैव दोषः प्रदर्शितः। एतावता एधतेः तत्र सम्भवो न इति नैव वक्तुं शक्यते। रूपग्रहणपक्षे तु एधतेः असम्भवात् ग्रहणं न कृतम्। अतः इण्धातोरेव विषये उभयपक्षे दोषप्रदर्शनं भाष्ये कृतम्।

नागेशोपाध्यायोक्तदिशा एत्येधत्योः इत्यत्र एधतिग्रहणस्य सम्भवमात्रेण उपादानापेक्षया इणिकारादौ इत्यत्र उपलक्षणमेव युक्तम्। स्वतः नागेशोपाध्यायेन "उपैधयते" इत्यत्र ण्यन्ते वृद्धिरिष्यते। तत्र च प्रकृतिभागस्य "एध्रूपत्वात्" इत्युक्तम्[5]। मा भवान्

---

1. महाभाष्यम् भागः – 5. पृ. सम् – 98
2. महाभाष्यम् भागः – 5. पृ. सम् – 98
3. महाभाष्यम् भागः – 5. पृ. सम् – 98
4. महाभाष्यम् भागः – 5. पृ. सम् – 98
5. लघुशब्देन्दुशेखरः भागः 1. पृ. सम् – 137

प्रेदिधत् इत्यत्र अनभिधानमुच्यते इति न युक्तम्। भाष्याशयस्तु अनभिधानकथने न पूरकः। प्रकृतिभागस्य एध्रूपत्वात् इत्यत्र प्रकृतिभागस्य आनुपूर्वीरूपं गृह्यते उत एध्धातुः? ण्यन्तस्य अवयवः धातुः गृह्यते इति अभिषावयति इत्यादौ भाष्ये साधितम्। तद्वत् अत्रापि एध्रूपत्वमित्यस्यापि एध्धातुत्वं खलु ग्राह्यम्। तथा च प्रकृतिभूत-एध्धातुत्वमाश्रित्य यदा विचार्यते तदा प्र इदिधत् इत्यत्र अतिव्याप्तिः सम्भाव्यते। ततः एचि इति विशेषणम् एधत्यंशेऽपि युक्तमेव।

**आकरग्रन्थाः**

1. **वैयाकरणसिद्धान्तकौमुदी** (बालमनोरमा – तत्त्वबोधिनीसहिता) भट्टोजीदीक्षित-विरचिता, श्रीमद्गिरिधरशर्मणा श्रीपरमेश्वरानन्दशर्मणा च संशोद्ध्य सम्पादिता, मोतीलाल बनारसीदास, दिल्ली, 8th edition, 2005.
2. **व्याकरणमहाभाष्यम्** प्रदीपोद्योतसहितम्, पतञ्जलिना विरचितम्, भार्गवशास्त्रिभिः संशोधितम्, चौकम्बा संस्कृतप्रतिष्ठानम् देहली, 2011(पुनर्मुद्रणम्)
3. **लघुशब्देन्दुशेखरः** (भावबोधिनी – बालबोधिनीसहितः), आचार्यश्रीपादसत्य-नारायणमूर्तिभिः सम्पादितः, Rashtriya Sanskrit Vidyapeetha, Tirupati, 2001.

